# अलब्धस्य प्राप्तिः

**अलब्धमीहेत् धर्मेण**
**लब्धं यत्नेन पालयेत्।**
**पालितं वर्धयेत् नीत्या**
**वृद्धं पात्रेषु निक्षिपेत्।।**

धर्मस्य, कामस्य, मोक्षस्य, च पुरुषार्थेषु यावत् प्राधान्यं तावदेव प्राधान्यं अर्थस्य अपि। किन्तु स्वेच्छया अर्थस्य सम्पादनं शास्त्रं, स्मृतिः, शिष्टव्यवहारः वा न अङ्गीकरोति। अर्थसम्पादनार्थं एषः श्लोकः युक्तं मार्गम् उपदिशति।

यत् अस्माकं समीपे नास्ति तदर्थं इच्छा उचिता एव। किन्तु अपेक्षितस्य प्राप्त्यर्थं धर्ममार्गः अनुसरणीयः। प्राप्तस्य पालनार्थम् अपि युक्तः प्रयत्नः अनुष्ठेयः। प्राप्तं उदासीनभावनातः शीघ्रम् एव विनश्येत्। पालितस्य वर्धनम् अपि कर्तव्यम् एव। किन्तु अत्र नीतिमार्गः न विस्मर्तव्यः। यत् वर्धितं तस्य सत्पात्रे विनियोगः इति तु अन्तिमं सोपानम्।

अलब्धस्य लाभः, लब्धस्य पालनम्, पालितस्य वर्धनम्. वर्धितस्य सत्पात्रे विनियोगः इति चत्वारि सोपानानि उक्तानि अत्र। एकैकस्मिन् अपि सोपाने युक्तः मार्गः सूचितः अस्ति।

किन्तु इदानीं लोके व्यवहारः कथं दृश्यते? दृष्टं सर्वम् अपेक्षितम् इति इच्छा सर्वेषाम्। तत्र धर्ममार्गः विस्मर्यते। लब्धस्य प्रयत्नेन पालनम् अपि विरलम् एव। पालितस्य वर्धनं दृश्यते, किन्तु नीतिमार्गः न अनुस्रियते। वर्धितस्य सत्पात्रे दानं तु लोके कुत्र पश्यामः वयम्?

इदानीम् अर्थः पुरुषार्थप्रापकः नास्ति एव। अर्थः तु सुखभोगादीनां साधनं जातम्। अर्थसम्पादनार्थं प्राचीनैः यः धर्माविरुद्धः मार्गः सूचितः पालितः च आसीत्, सः अस्माभिः सर्वथा विस्मृतः।

जिज्ञासा –

# समासे पूर्वपदे नकारलोपः

शिष्यः – श्रीमन्! शास्त्रीमहोदयः मह्यम् एकं पत्रं लिखितवान्।

आचार्यः- कः पत्रं लिखितवान्?

शि – शास्त्रीमहोदयः।

आ – शास्त्रीमहोदयः न, शास्त्रिमहोदयः इति वक्तव्यम्।

शि – किमर्थं तथा वक्तव्यम्?

आ – किमर्थम् इति ज्ञातुं समासप्रक्रिया स्थूलतया ज्ञातव्या भवति।

शि – ज्ञापयतु तावत्।

आ – समासे पूर्वपदम् उत्तरपदं चेति पदद्वयं भवति सामान्यतः। दशरथस्य पुत्रः इत्यत्र दशरथस्य इति पूर्वपदम्। पुत्रः इति उत्तरपदम्।

शि – समासे पूर्वपदस्य विभक्तेः लोपः भवति किल?

आ – तत्र कश्चन सोपानक्रमः अस्ति-

1) अर्थानुगुणं पदानां विभागं कुर्मः। यथा-दशरथस्य पुत्रः इति।

2) तत्तत्पदानां विभक्तिं प्रत्ययद्वारा सूचयामः। तन्नाम– प्रातिपदिकस्य विभक्तेः च विभागः भवति।
यथा–दशरथ (षष्ठी = ङस्) + पुत्र (प्रथमा = सु)

3) पूर्वोत्तरपदयोः विभक्तेः लोपः भवति। तेन उभयत्र अपि प्रातिपदिकमात्रम् अवशिष्यते।
यथा - दशरथ (~~षष्ठी = ङस्~~) + पुत्र (~~प्रथमा = सु~~) – दशरथ + पुत्र

4) सन्दर्भानुगुणम् उत्तरपदस्य अग्रे विभक्तिः योज्यते - दशरथपुत्रः दशरथपुत्रस्य, दशरथपुत्रेण इत्यादिरूपेण।

शि – एतेषां सोपानानां ज्ञानेन मम कः विशेषलाभः?

आ – भवान् पृष्टवान् खलु - शास्त्रीमहोदयः इति कुतः न भवति इति? तस्य उत्तरं भवान् एव ज्ञातुं शक्नोति। शास्त्रिमहोदयः इत्यत्र कः समासः इति वक्तुं शक्नोति वा?

शि – समानविभक्तिकत्वम् अस्ति। अतः कर्मधारयसमासः।

आ – पूर्वोक्तक्रमेण सोपानानि सूचयतु। 'शास्त्री' इति इन्नन्तशब्दस्य रूपम् इति स्मरतु।

शि – शास्त्री + महोदयः ......... I

शास्त्रिन् (प्रथमा = सु) + महोदय (प्रथमा = सु) - II

शास्त्रिन् (~~प्रथमा = सु~~) + महोदय (~~प्रथमा = सु~~) - III

आ – तिष्ठतु। पूर्वपदे यदि अन्ते नकारः स्यात् तर्हि तस्य लोपः भवति इति एकः नियमः अस्ति*।

शि – तर्हि शास्त्रिन् इत्यत्र नकारस्य लोपः भवति? तदा शास्त्रि + महोदय इति प्रातिपदिकम्। विभक्तियोजनं कृतं चेत् शास्त्रिमहोदयः इति रूपम्।

आ – इदानीं भवान् एव ज्ञातवान् खलु शास्त्रिमहोदयः इति कुतः न भवति इति?

शि – आम्। अधिकारिणः समीपम् – अधिकारिसमीपम्। पादचारिणां धर्मः पादचारिधर्मः इत्यादयः अपि एवम् एव किल?

आ – एतादृशानि अन्यानि व्यावहारिकानि उदाहरणानि वदतु।

शि – राज्ञः पुरुषः – राजपुरुषः, परमात्मनः रूपेण परमात्मरूपेण, महिम्नः वर्णनम् – महिमवर्णनम्, शक्तिशाली पुरुषः – शक्तिशालिपुरुषः इत्यादयः।

आ – एवं समासे पूर्वपदे स्थितस्य नकारस्य लोपः भवति इति सर्वदा स्मरतु भवान्।

---

* नलोपः प्रातिपदिकान्तस्य - पाणिनिसूत्रम्।








ikaya-E-3-86-HIN




# चन्दमामा

संस्थापकः- 'चक्रपाणिः' सञ्चालकः- 'नागिरेड्डी'

"अहं सस्कृतं विशेषतः न जानामि, अतः संस्कृतप्रचारे किं साहाय्यं कर्तुं शक्नोमि?" "मम गृहादिदायित्वम् अत्यधिकम्। अतः संस्कृतज्ञः सन् अपि किमपि कार्यं कर्तुं न शक्नोमि" इत्यादीनि वाक्यानि तदा तदा श्रूयन्ते। 'सर्वैः अपि समय दत्तः चेदेव संस्कृतोन्नतिः साध्या' इति सत्यम् एव। किन्तु ये सर्वथा समयं दातुम् एव न शक्नुवन्ति ते कीदृशं साहाय्यम् आचरितुं शक्नुयुः?

ते एकं तु कर्तुम् अर्हन्ति। तच्च निरन्तरं सम्भाषणव्रतस्य आश्रयणम्। संस्कृतज्ञेन सह संस्कृतेन एव सम्भाषणं करणीयम्। 'अहं गच्छामि, सः आगच्छति' इत्यादीनां सामान्यवाक्यानां प्रयोगेण, दैनन्दिन-सम्भाषणेन संस्कृतप्रचारः कथं सिध्यति? इति तु न चिन्तनीयम्। यतः सामान्यसम्भाषणम् अपि महान्तं प्रभावं जनयति। ये तत् सम्भाषणं शृण्वन्ति ते संस्कृतस्य व्यावहारिकतां सरलतां च स्वयम् अङ्गीकुर्वन्ति। इतरे अपि सम्भाषणे उत्तेजिताः भवन्ति। सम्भाषणव्रतं दृष्ट्वा बहवः प्रेरणां प्राप्य स्वयं सम्भाषणव्रतं स्वीकुर्युः अपि। सम्भाषणव्रतिनः भाषा क्रमशः परिष्कृता शुद्धा च भवति इति तु अन्यः लाभः।

ये शक्नुवन्ति ते समयदानेन धनादिदानेन च संस्कृतमातुः सेवां कुर्युः। ये तत् कर्तुम् असमर्थाः ते सम्भाषणव्रतं वा स्वीकुर्युः एव।

सम्पुटः - ४ अगस्ट् - ८७ सञ्चिका-५

प्रतिकृतिमूल्यं रू. २-५० वार्षिकं ग्राहकशुल्कं रू. ३०-००

CHITRA

# विश्वामित्रयागरक्षणम्

(रामलक्ष्मणौ विश्वामित्रस्य यागस्य रक्षणं कुरुतः। तं सन्दर्भम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः। उत्तररूपेण विकल्पत्रयं सूचितम् अस्ति। युक्तम् उत्तरं सूचयन्तु।)

I. विश्वामित्रः यागरक्षणार्थं रामलक्ष्मणयोः साहाय्यं प्रार्थितवान्। यतः—

१. सः ऋषिः इत्यतः युद्धविद्यां न जानाति।

२. यज्ञदीक्षितः इत्यतः शस्त्रप्रयोगं न करोति।

३. दशरथस्य परीक्षां कर्तुम् इच्छति।

II. 'रामलक्ष्मणौ प्रेषयतु' इति वसिष्ठः दशरथं सूचितवान्। यतः-

१. वसिष्ठः जानाति यत् विश्वामित्रः रामलक्ष्मणयोः कीर्तिं वर्धयितुम् इच्छति।

२. विश्वामित्रस्य कोपात् सः अतीव भीतः।

३. विश्वामित्रस्य विरोधं सः सर्वथा न इच्छति।

III. सरयूनद्याः तीरे विश्वामित्रतः रामलक्ष्मणाभ्यां प्राप्तयोः मन्त्रयोः नाम-

१. बलम् अतिबलं च इति। २. गायत्री सावित्री च इति। ३. अस्त्रं शस्त्रं च इति।

IV. विश्वामित्रः इति प्रसिद्धस्य कौशिकराजस्य पितुः नाम-

१. कुशः। २. कुशनाभः। ३. गाधिः।

V. ताटकायाः वासस्थानं दण्डकारण्यं यत्र अस्ति तत्र पूर्वं नगरद्वयम् आसीत्। तयोः नाम-

१. मलदः करूपः च इति। २. अङ्गदेशः वङ्गदेशः च इति।

३. कौशाम्बिः गिरिव्रजः च इति।

VI. रामः ताटकां कथं संहृतवान्?

१. ब्रह्मास्त्रप्रयोगेण। २. शब्दवेदिविद्यया। ३. सामान्येन अस्त्रेण।

उत्तराणि - I - २. II - १. III - १. IV - ३. V - १. VI - २.

## र स वा र्ताः



## सर्वोच्चं शिखरम्

हिमालयस्य एवरेष्ट्शिखरं प्रपञ्चे एव अत्युन्नतम् इति सुप्रसिद्धम्। किन्तु अत्रान्तरे अमेरिकादेशीयः गगनयात्रिकः सूचितवान् यत् हिमालयस्य अन्यत् शिखरम् एवरेस्ट् अपेक्षया उन्नतं,यस्य च नाम 'के-२' इति। किन्तु, एषः वादः इतोऽपि न प्रमाणीकृतः।

## पुराणकालीना द्वारका



पुराणेषु वर्णनं दृश्यते यत् पश्चिमसमुद्रतटे श्रीकृष्णः द्वारकानगरं निर्मापितवान् आसीत्। तच्च अनन्तरकाले समुद्रे लीनम् इति। कच्छाते अरबसमुद्रे च प्रवृत्तेन भूखननेन ज्ञायते यत् सामान्यतः सार्धत्रिसहस्रवर्षेभ्यः पूर्वं तत्र एकं नगरम् आसीत् इति। इदानीम् एतद्विषये विशेषसंशोधनं प्रचलत् अस्ति।

## पालितः चिम्पाजी




जयपुरीयः प्रतापनामकः राधानामकं चिम्पाजीप्राणिनं पालितवान्,या च इदानीं मानावानां व्यवहारं जानाति। इदानीं सा राधा मानवाः इव वेषभूषादिकं धरति। निष्कासयितुम् अपि शक्नोति। मानवाः इव चषकेण चायं पिबति च।

## राक्षसगोधिका

तिरुपतितः ४५ कि.मी. दूरे 'तलकोना' नामके वने १८ फूट्दीर्घा काचित् गोधिका दृष्टा अस्ति। वेङ्कटेश्वर विश्वविद्यालयस्य प्राणिशास्त्रविभागीयाः एतस्य भावचित्रग्रहणार्थं कांश्चन प्रेषितवन्तः। अस्माकं देशे त्रिंशद्वर्षेभ्यः पूर्वम् अपि एतादृशी राक्षसगोधिका दृष्टिगोचरा जाता आसीत्।



पुराणगाथावली–

# शलः

सुशोभना-परीक्षितयोः पुत्रः शलः अहङ्कारी। एकदा सः मृगयार्थं गतवान्। वने एकं हरिणं दृष्ट्वा तम् अनुसृतवान्। बहुदूरं यावत् अनुसरणानन्तरम् अपि सः हरिणं मारयितुं न शक्तवान्। तस्य रथस्य अश्वौ श्रान्तौ। तथापि शलः प्रतिगन्तुं न इच्छति। अग्रे गच्छन् सः एकं मुनेः आश्रमं दृष्टवान्। आश्रमस्य पुरतः उभौ अश्वौ बद्धौ आस्ताम्। सः आश्रमः वासुदेवमुनेः आसीत्।

शलः आश्रमं गत्वा वासुदेवमुनिं भक्त्या नमस्कृतवान्। मृगयार्थं प्रस्थितस्य स्वस्य हरिणमारणे असामर्थ्यं निवेद्य प्रार्थितवान्- "मुनिवर! भवदीयौ अश्वौ मह्यं दातव्यौ" इति।

"अस्तु तावत्। भवान् एतौ अश्वौ नयतु। किन्तु यदा मृगयाकार्यं समाप्तं भवति तदा एतौ अवश्यं प्रत्यर्पणीयौ" इति सूचितवान् मुनिः।

"निश्चयेन प्रत्यर्पयिष्यामि। अश्वौ प्रत्यर्प्य एव राजधानीं गमिष्यामि" इति उक्त्वा सः अश्वौ स्वीकृत्य रथे योजितवान्। अनन्तरं पुनः अपि तस्य हरिणस्य मारणार्थं प्रस्थितः च। तद्दिने सः तं हरिणम्, अन्यान् बहून् मृगान् च मारितवान्। मृगयां समाप्य साक्षात् राजधानीं गतवान् च।

मुनेः वासुदेवस्य शिष्याः मार्गे अभिमुखम् आगत्य तं सूचितवन्तः- "महाराज! मृगयासमाप्तेः अनन्तरम् अश्वौ प्रत्यर्पयिष्यामि इति भवता अङ्गीकृतम् आसित्। इदानीम् एतौ कुत्र नयन् अस्ति?" इति।

"एतौ सुन्दरौ बलशालिनौ च अश्वौ अहंन प्रत्यर्पयामि। तपोजपादिषु निरतस्य भवताम् आचार्यस्य एताभ्याम् अश्वाभ्यां किं प्रयोजनम्? अतः भवन्तः प्रतिनिवृत्य गुरुदेवं निवेदयन्तु यत् सः राजधानीम् आगत्य अश्वद्वयस्य स्थाने धेनुद्वयं नयतु इति" इति उक्त्वा शलः दर्पेण अश्वौ अग्रे प्रेरितवान्।

अनन्तरक्षणे तौ अश्वौ राक्षसरूपं धृतवन्तौ। कृतघ्नस्य तस्य रथं पातितवन्तौ। वचनभ्रष्टं तं शलं मारयित्वा वासुदेवमुनेः आश्रमं प्रति गतवन्तौ च।





# गङ्गाजलम्

धर्मपुरे पूर्णचन्द्रः नाम कश्चन कुसीदवणिक् आसीत्। सः ऋणस्य चक्रवृद्धिं स्वीकुर्वन् जनान् लुण्ठयति स्म। रामनाथः पूर्णचन्द्रस्य अद्वितीयः पुत्रः। सः अपि पितरम् एव अनुकरोति। पितुः मार्गदर्शनेन कुसीदवाणिज्यस्य अन्तरङ्गं सम्यक् जानाति सः। इदानीं सः अपि पित्रा सूचितानि तन्त्राणि प्रयुञ्जन् जनान् क्लेशयति।

कदाचित् पूर्णचन्द्रः पार्श्ववायुरोगेण ग्रस्तः अभवत्। एतस्य रोगस्य चिकित्सां सः न कारितवान्। यतः सः आत्मनः निमित्तकं व्ययं न इच्छति।

किन्तु, रामनाथः 'पिता दीर्घकालं जीवतु' इति इच्छति। अतः सः उत्तमानां वैद्यानां द्वारा पितुः चिकित्सां कारितवान्। किन्तु तेन कोऽपि लाभः न जातः।

तेषु एव दिनेषु दयानिधिः नाम संन्यासी धर्मपुरम् आगतवान्। सः संन्यासी ज्ञानी सिद्धपुरुषः च इति प्रसिद्धिः आसीत्। अतः सर्वे ग्रामीणाः तस्य दर्शनार्थम् उत्सुकाः जाताः।

रामनाथः अपि तस्य महात्मनः दर्शनं प्राप्तवान्। पितुः अवस्थां निवेद्य प्रार्थितवान् च -"महात्मन्, पितुःस्वास्थ्यलाभार्थं कमपि उपायं सूचयतु" इति।

दयानिधिः क्षणकालं नेत्रे निमील्य मौनं स्थितवान्। अनन्तरम् उक्तवान् च -"भवतः पिता कुसीदवाणिज्येन बहून् जनान् वञ्चितवान्। यावत् धनं सम्पादितवान् तावदेव पापम् अपि सञ्चितवान्। यदि सः काशीं गत्वा गङ्गायां स्नात्वा विश्वनाथस्य दर्शनं प्राप्नुयात् तर्हि व्याधिः उन्मूलितः भवेत्" इति।

रामनाथः दीनतापूर्णस्वरेण निवेदितवान् -"भगवान्! मम पिता चलितुम् एव असमर्थः। तादृशः सः काशीपर्यन्तं प्रयाणं



शक्नोमि अहम्। अतः काशीं गत्वा शीघ्रम् एव प्रत्यागमिष्यामि" इति निवेद्य रामनाथः यात्रार्थं प्रस्थितवान्।

सः काशीं गतवान्। गङ्गानद्यां स्नात्वा श्रद्धया विश्वनाथस्य दर्शनं कृतवान्। एकस्मिन् कलशे गङ्गाजलं पूरयित्वा ततः प्रतिप्रस्थितवान् च।

रामनाथः अरण्यमार्गेण आगच्छन् आसीत्। तदा लम्बकर्णा नाम काचित् पिशाचा तस्य पुरतः आगत्य स्थितवती। पिशाचां दृष्ट्वा भीतः रामनाथः गमनं स्थगितवान्।

तदा लम्बकर्णा रामनाथम् उक्तवती "भोः, भीतिः मास्तु। अहं परोपकारिणी पिशाचा। हानिकारिणी न। भवान् मत्तः किमपि साहाय्यम् इच्छति वा?" इति।

रामनाथः उत्तरितवान् -"भवत्याः साहाय्यं मम किमर्थम्? अहं काशीं गत्वा विश्वनाथदर्शनं कृत्वा प्रत्यागच्छन् अस्मि। मम हस्ते पवित्रं गङ्गाजलम् अस्ति। एतेन एव मम इष्टसिद्धिः भविष्यति" इति।

लम्बकर्णा रामनाथं प्रणम्य विनयेन उक्तवती -"भवान् मानवश्रेष्ठः। भवतः हस्ते स्थितं गङ्गाजलं मह्यम् अपि किञ्चित् ददातु। तेन अहं पिशाचजन्मतः मुक्तिं प्राप्तुं शक्नुयाम्" इति।

"एतत् जलम् आनेतुम् अहं महान्तं श्रमम् अनुभूतवान्। एतदर्थं महान् व्ययः अपि कृतः। एतादृशं जलं पिशाचायै भवत्यै दातुं

कर्तुं सर्वथा न शक्नोति" इति।

तदा दयानिधिः उक्तवान् -"एवं तर्हि पितुः निमित्तं भवान् एव काशीं गच्छतु। गङ्गायां स्नात्वा विश्वनाथं भक्त्या पूजयित्वा गङ्गाजलम् आनयतु। पितरं पाययतु च। तेन भवतः पिता स्वस्थः भविष्यति" इति।

एतदनुसारं रामनाथः काशीप्रयाणार्थं गन्तुं सिद्धः अभवत्।

पुत्रस्य यात्रार्थं सिद्धतां दृष्ट्वा पूर्णचन्द्रः पृष्टवान् -"पुत्र! अहं अस्वास्थ्यकारणतः शयनम् आश्रितवान् अस्मि। भवान् तु काशीं गन्तुं सिद्धः सञ्जातः। एवं तर्हि कुसीदवाणिज्यस्य का वा गतिः?" इति।

"पितः, भवतः एतां दयनीयां दशां द्रष्टुं न

न। अपसरतु इतः" इति उक्त्वा रामनाथः अग्रे प्रस्थितः।

लम्बकर्णा रामनाथम् अनुसृत्य गच्छन्ती "गङ्गानद्यां स्नात्वा एव भवान् एतत् गङ्गाजलम् आनीतवान्। अतः भवान् पुण्यात्मा। भवतः पादरजसः स्पर्शेन अपि अहं मुक्तिं प्राप्तुं शक्नोमि" इति उक्त्वा रामनाथस्य पादधूलिं भक्त्या उन्नीतवती। स्वशरीरस्य उपरि सिञ्चनं कृतवती च।

अनन्तरक्षणे एव लम्बकर्णा रूपान्तरं प्राप्तवती। सुन्दरमहिलायाः रूपं प्राप्य सा प्रत्यक्षा अभवत्। रामनाथं कृतज्ञतावचनानि उक्त्वा ततः निर्गतवती च।




एतया घटनया आश्चर्यचकितः रामनाथः अग्रे गतवान्। तदा कश्चन सुदृढकायः पुरुषः तस्य पुरतः आगतवान्। सः एकं लघुशकटं चालयन् आसीत्। तेन सह एकः बालकः अपि आसीत्।

सः रामनाथं प्रणम्य पृष्टवान् - "महोदय! अहं भवतः साहाय्यं किमपि कर्तुं शक्नोमि वा?" इति।

"मम साहाय्यम्? कः भवान्? किं नाम भवतः?" इति पृष्टवान् रामनाथः।

"श्रीमन्! मम नाम रुधिरोष्णः इति। पूर्वम् अहं सुप्रसिद्धः चोरः आसम्। मया यत् पापम् आचरितं तस्य परिणामतः मम पुत्रः कुष्ठरोगेण पीडितः अस्ति। इदानीम् अहं दुष्टकार्याणि सर्वथा परित्यक्तवान्। भवादृशानां साहाय्यं कुर्वन् पापभारं न्यूनीकर्तुं यावच्छक्यं प्रयत्नं कुर्वन् अस्मि" इति उक्तवान् रुधिरोष्णः।

"इदानीं भवतः साहाय्यं किमपि अनावश्यकं मम। अहम् अतीव त्वरायाम् अस्मि। अपसरत् मम मार्गतः" इति उक्तवान् रामनाथः।

रुधिरोष्णः रामनाथस्य हस्ते स्थितं ताम्रपात्रं कुतूहलेन क्षणकालं दृष्टवान्। अनन्तरं पृष्टवान् च - "श्रीमन्! एतत् पात्रं तावत्या जागरूकतया गृहीतवान् खलु? किम् अस्ति अन्तः?" इति।

"एतस्मिन्? पवित्रं गङ्गाजलम् अस्ति। एतस्य सेवनेन मम पिता पार्श्ववायुरोगतः उन्मुक्तः भविष्यति" इति। उत्तरितवान् रामनाथः।



"गङ्गाजलम्! तर्हि इतः किञ्चित् मम पुत्राय अपि ददातु भोः। सोऽपि व्याधितः विमुक्तिं प्राप्नोतु" इति दैन्येन प्रार्थितवान् रुधिरोष्णः।

तदा क्रुद्धः रामनाथः -"अहं महता कष्टेन गङ्गाजलम् आनीतवान् अस्मि। एतत् पवित्रं जलं भवादृशस्य लुण्ठकस्य सहाय्यार्थं न" इति उक्त्वा वेगेन अग्रे गतवान्।

एवं गमनेन रामनाथस्य हस्ते स्थितात् ताम्रकलशात् द्वित्राः गङ्गाजलबिन्दवः भूमौ पतिताः।

एतत् दृष्ट्वा रुधिरोष्णः उक्तवान् -"एतस्य पवित्रजलस्य बिन्दुमात्रस्य स्पर्शेन अपि मम पुत्रस्य व्याधिः दूरं गन्तुम् अर्हति" इति। अनन्तरं यत्र जलं पतितं तत्प्रदेशस्य मृत्तिकां स्वीकृत्य तया पुत्रस्य शरीरं लिप्तवान्।

अनन्तरक्षणे एव रुधिरोष्णस्य पुत्रस्य शरीरं सुवर्णकान्त्या शोभमानम् अभवत्।

रुधिरोष्णः रामनाथं कृतज्ञतापूर्वकं नमस्कृत्य -"भवतः उपकारं कदापि न विस्मरामि" इति उक्त्वा ततः निर्गतवान्।

रामनाथः गृहं प्रत्यागत्य पित्रे यात्रावृत्तान्तं समग्रं निवेदितवान्। "तात! गङ्गानद्यां स्नानेन मया महत् पुण्यं प्राप्तम्। अतः मम चरणधूलेः स्पर्शेन पिशाचा मुक्तिं प्राप्तवती। गङ्गाजलमिश्रितमृत्तिकायाः लेपनेन लुण्ठकपुत्रस्य रोगः अपगतः च। इदानीम् अहं स्वहस्तेन गङ्गाजलं पाययन् अस्मि। भवतः व्याधिः अवश्यं दूरं गमिष्यति" इति उक्त्वा रामनाथः पितरं किञ्चित् गङ्गाजलं पायितवान्।

गङ्गाजलपानेन पूर्णचन्द्रस्य रोगापमनं किं, वार्तालापशक्तिः अपि अपगता। बहुधा चिन्तनेन अपि एवं किमर्थं जातम् इति रामनाथः न ज्ञातवान्।

रामनाथः दयानिधेः दर्शनं पुनः कृतवान्। काशीयात्रायाः अनुभवान् समग्रतया श्रावयित्वा पृष्टवान् च -"महात्मन्! पवित्रस्य गङ्गाजलस्य पानेन मम पितुः रोगापगमनं किं, सम्भाषणशक्तिः अपि लुप्ता अभवत्। एवं किमर्थं जात स्यात्? कः लोपः अत्र?" इति।

दयानिधिः गाम्भीर्येण उक्तवान् -"सा पिशाचा सः लुण्ठकः च आत्मना कृतं पापं

ज्ञात्वा पश्चात्तापम् अनुभूतवन्तौ। एतावदेव न, परेषां हितम् अपि चिन्तितवन्तौ। किन्तु भवान् केवलं स्वपितुः हितं चिन्तयन् अस्ति। स्वार्थभावनया प्रेरितः सन् मार्गे याचनां कृतवतोः प्रार्थनां तिरस्कृत्य आगतवान्। जलदानं किं, सहानुभूतिपूर्णं वचनम् अपि भवतः मुखात् न आगतम्। भवतः पिता तु कुसीदव्यवहारेण वञ्चयन् बहून् भिक्षुकान् कृतवान्। पार्श्ववायुरोगेण पीड्यमानः अपि प्रायश्चित्तं न आचरति सः। अतः गङ्गाजलं निष्प्रयोजकं जातम्" इति।

"महानुभाव! कुसीदव्यवहारः अस्माकं परम्परागता वृत्तिः। तस्यां वृत्तौ यत् सहजं तदेव कृतवान् मम पिता।एतादृशं तं किमर्थं पापिनं भावयति भवान्?" इति पृष्टवान् रामनाथः।

तदा दयानिधिः मन्दहासं प्रकटयन् उक्तवान् -"वत्स! सर्वासु वृत्तिषु न्याय्यम् अन्याय्यं च भवति एव। भवन्तः तु न्यायमार्गं परित्यज्य अन्याय्येन अधिकां वृद्धिं स्वीकुर्वन्तः सन्ति। जनानाम् अनिवार्यतायाः दुरुपयोगः स्वीकृतः भवद्भिः" इति।

इदानीं रामनाथे विवेकः उदितः। सः दयानिधिं साष्टाङ्गं नमस्कृत्य उक्तवान् -"श्रीमन्! भवान् मां विवेकं बोधितवान्" इति।

अनन्तरं सः ग्रामं गत्वा अवशिष्टं गङ्गाजलं ग्रामस्थेभ्यः रोगिभ्यः वितीर्णवान्। न्याययुतेन मार्गेण पुनः अपि कुसीदव्यवहारम् आरब्धवान् च।

दयानिधेः उपदेशं पूर्णचन्द्रः पुत्रमुखात् श्रुतवान्। तत्प्रभावतः तस्मिन् अपि परिवर्तनं जातम्।

पश्चात्तापेन दग्धः सः पुत्रस्य नूतनं व्यवहारं पूर्णेन हृदयेन प्रोत्साहितवान्। एतेन सः अल्पेषु एव दिनेषु स्वस्थः सञ्जातः।

पूर्णचन्द्रः रामनाथः च ज्ञातवन्तौ यत् मानवतागुणः सद्व्यवहारः च गङ्गाजलापेक्षया पवित्रं महत्त्वपूर्णं च इति। अतः तौ उभौ अपि सदाचारतत्परौ जातौ। धर्मपुरग्रामे धार्मिकजनेषु अग्रगण्यौ जातौ च।





# पणः

रत्नपुरराज्यं अशोकगुप्तः परिपालयति स्म। तस्य आस्थाने चिदानन्दः नाम विदूषकः आसीत्। सः चतुरोक्तिभिः महाराजस्य इतरेषां च मनोविनोदं जनयति स्म। तेनैव सह महत्त्वपूर्णेषु विषयेषु निर्णयार्थं महाराजस्य साहाय्यं करोति स्म अपि। स्वामिभक्तिः, दक्षता, स्नेहः, हास्यप्रियता इत्यादिभिः गुणैः सः महाराजस्य आन्तरङ्गिकेषु अन्यतमः आसीत्।

चिदानन्दस्य श्यालः मोहनः सुदूरे स्थिते ग्रामे निवसति। सः इच्छति स्म यत् चिदानन्दस्य प्रभावबलात् राजास्थाने किमपि उद्योगस्थानं प्राप्तव्यम् इति।

अतः सः कदाचित् राजधानीम् आगत्य चिदानन्दं दृष्ट्वा तस्मै स्वीयाम् इच्छां प्रकटितवान्।

चिदानन्दः मोहनस्य वचनानि मौनं श्रुतवान्। मोहनस्य बुद्धिमत्तायाः व्यवहारकौशलस्य च विषये चिदानन्दस्य विश्वासः नास्ति।

अतः सः मोहनम् उक्तवान् - "भोः, मम वचनानि श्रुत्वा महाराजः उद्योगं न ददाति। राजास्थाने तादृशाः एव उद्योगं प्राप्नुवन्ति येषु च सामर्थ्यं, समयप्रज्ञा, बुद्धिमत्ता इत्यादयः भवन्ति" इति।

"भवान् यान् गुणान् वदति तान् अहं महाराजस्य पुरतः एव प्रमाणीकरिष्यामि। भवान् कथञ्चित् महाराजस्य दर्शनम् एकवारं कारयतु, पर्याप्तम्" इति उक्तवान् मोहनः।

"महाराजस्य दर्शनकारणे मम क्लेशः कोऽपि नास्ति। किन्तु भवान् महाराजस्य पुरतः स्वबुद्धिमत्तां प्रमाणीकुर्यात् इत्यत्र मम विश्वासः नास्ति" इति उत्तरितवान् चिदानन्दः।

चिदानन्दस्य वचनेन मोहनस्य

"भगिनी"

अत्माभिमानस्य घातः जातः। सः कोप-मिश्रितस्वरेण पृष्टवान् -''यदि अहं महाराजस्य पुरतः मम बुद्धिमत्तां प्रमाणीकुर्यां तर्हि भवान् किं ददाति?'' इति। एवम् उक्त्वा एकं विचित्रं पणं चिदानन्दस्य पुरतः उपस्थापितवान् च।

एतं पणं श्रुत्वा चिदानन्दः आश्चर्चचकितः। यतः सः एतादृशं पणम् इतः पूर्वं कदापि न श्रुतवान् आसीत्। मोहनस्य आत्मविश्वासपूर्णं वचनं श्रुत्वा चिदानन्दः मौनम् तत् अङ्गीकृतवान्।

अनन्तरदिने मोहनेन सह चिदानन्दः राजास्थानं गतवान्।

तत्समये महाराजः सेवकस्य हस्ततः क्षीरं स्वीकुर्वन् आसीत्। चिदानन्दः महाराजं नमस्कृतवान्। मोहनस्य परिचयं कारितवान् च।

मोहनः महाराजं प्रणम्य पृष्टवान् -''महाराज! किं भवान् क्षीरपानं मुखेन एव करोति?'' इति।

एतत् प्रश्नं श्रुतवन्तः महाराजस्य आश्चर्यम् असमाधानं च। सः कोपेन एव पृष्टवान् -''क्षीरं मुखेन विना किं नासिकया पातुं शक्यते वा?'' इति।

''क्षाम्यतु महाराज ! नासिकया अपि पातुं शक्यते। यदि कोऽपि पणः निश्चितः स्यात् तर्हि तथा पीत्वा प्रदर्शयामि अहम्'' इति उक्तवान् मोहनः।

एतत् तु अपूर्वं वचनम्। अतः राजा मन्दहासपूर्वकम् उक्तवान् -''विचित्रं एतत्। वदतु, पणत्वेन कीदृशं वस्तु धनं वा निश्चेतव्यम्?'' इति।



मोहनः विनयेन उक्तवान् -"महाराज! अहं निरुद्योगी। मम समीपे एकं रजतनाणकम् अस्ति। तदेव पणत्वेन स्थापयामि" इति।

राजा एतत् अङ्गीकृतवान्। स्वहस्ते स्थितं क्षीरपात्रं मोहनस्य हस्ते दत्तवान् च।

मोहनः समग्रं क्षीरं मुखेन एव पीतवान्। "महाराज! अहं पराजितः अस्मि" इति उक्त्वा, एकं रजतनाणकं महाराजस्य पुरतः स्थापितवान् च।

एतत् दृष्ट्वा अशोकगुप्तः उच्चैः हसितवान्। विदूषकः चिदानन्दः मोहनस्य स्कन्धे प्रीत्या हस्तं स्थापयन् "साधु, मोहन साधु! वस्तुतः अपि भवान् महाचतुरः" इति उक्तवान्।

आश्चर्यचकितः अशोकगुप्तः प्रश्नार्थक– दृष्ट्या चिदानन्दं दृष्टवान्। तदा चिदानन्दः विनयेन उक्तवान् -"महाराज! भवान् मां यदि क्षाम्येत् तर्हि अहं भवतः पुरतः किञ्चित् निवेदयितुम् इच्छामि" इति।

"वदतु, का वार्ता सा?" इति विस्मितः राजा पृष्टवान्।

चिदानन्दः राजधानीं प्रति मोहनस्य आगमनप्रयोजनम् उक्तवान्। निवेदितवान् च -"महाराज! अहं मोहनम् उक्तवान् आसम् -'राजास्थाने उद्योगं प्राप्तुं कस्यापि परिचयादिकं साहाय्यं न करोति। स्वबुद्धिमत्तया समयस्फूर्त्या च तत्र व्यवहारः करणीयः इति। तदा मोहनः उक्तवान् -'दर्शनसमये महाराजः यदि किमपि पानीयं पिबन् स्यात् तर्हि अहं तत् एकस्य रजतनाणकस्य प्रतिफलरूपेण पिबामि' इति। 'महाराजः स्वहस्तेन एव तत् पानीयं यदि दद्यात् तर्हि एव पणः प्रमाणिंतः भवेत्' इत्यपि नियमः आसीत्। एषः मोहनः एव अत्र जयं प्राप्तवान्" इति।

राजा मन्दहासपूर्वकम् उक्तवान् -"भवतः श्यालः महाबुद्धिमान्बुद्धिमत्तया यत्किमपि साधयितुं शक्यते इत्येतत् सः प्रमाणीकृतवान्" इति।

तद्दिने एव मोहनं युक्ते उद्योगे नियोजितवान् महाराजः।






# १४

(चित्रसेनः पूर्वं दत्तं वचनं विस्मृत्य उग्राक्षाय अन्यम् एव बालकं दत्तवान्। एषा वञ्चना उग्राक्षेण ज्ञाता। अन्ते चित्रसेनः स्वकीयं पुत्रम् एव उग्राक्षाय दत्तवान्। उग्राक्षः तं बालकम् उग्रदत्तनाम्ना आहूतवान्। उग्रदत्तस्य विनोदार्थम् अन्यौ बालकौ आनीतवान्। त्रयः बालकाः अपि दिने दिने वर्धमानाः आसन्। तदनन्तरम्..........)

पञ्च वर्षाणि यावत् राजप्रासादे राजोपचारैः वर्धितः चित्रसेनस्य कुमारः इदानीम् राक्षसेश्वरस्य उग्राक्षस्य दुर्गे उग्रदत्तनाम्ना वर्धमानः आसीत्। उग्रदत्तस्य मनोविनोदार्थम् आनीतयोः बालकयोः नाम रुद्रः अरुद्रः इति निश्चितम् आसीत्। त्रयः अपि बालकाः सन्तोषेण क्रीडन्तः हसन्तः दिनानि यापयन्ति स्म। येषां वयः अल्पं ते परिसरानुगुणं प्रतिक्रियां प्रदर्शयन्ति खलु? तेषाम् आरोग्यम् अपि समीचीनम् एव आसीत्। ते राक्षसानाम् आचारव्यवहारान् अनुकुर्वन्ति स्म।

एवम् एव दिनानि अतीतानि। सप्ताहाः, मासाः, वर्षाणि चापि अतीतानि। पञ्चदशवर्षाणाम् अवधौ काऽपि विशेषघटना न प्रवृत्ता।

राक्षासानां हिंसावृत्तेः निवारणार्थम् उग्राक्षः तान् कृषिकार्ये नियोजितवान्




आसीत्। राक्षसाः अपि अरण्यस्थान् वृक्षान् उन्मूल्य भूमिं कर्षयन्तः नागरिकाः इव व्यवहरन्तः आसन्।

कर्षणार्थं वा वस्तूनां नयनानयनार्थं वा वृषभमहिषादयः तत्र उपयोगाय न भवन्ति स्म। महाकायान् राक्षसान् दृष्ट्वा ते भीत्या पलायनम् कुर्वन्ति स्म। महता प्रयत्नेन राक्षसाः मृदु व्यवहरन्ति स्म। तथापि महिषादीनां भीतिं निवारयितुं ते न शक्तवन्तः।

अनन्योपायाः राक्षसाः गजान् उष्ट्रान् खड्गमृगान् च हले शकटे च नियोज्य कृषिकार्यं निर्वर्तयन्ति स्म। अरण्यपरिसरे स्थिताः जनाः एतत् दृश्यं दूरतः एव कुतूहलेन पश्यन्ति स्म। नरभक्षकाणां राक्षसानां समीपम् आगन्तुं तेषां सहजभीतिः आसीत् एव।

उग्राक्षस्य स्पष्टः आदेशः आसीत् यत् केनापि नरमांसभक्षणम् इतः परं न करणीयम् इति। अतः राक्षसाः तां प्रवृत्तिं त्यक्तवन्तः आसन्। ग्रामात् पशून् अपहृत्य खादन्ति स्म किल? सा प्रवृत्तिः अपि त्यक्ता आसीत्। ग्रामीणाः आरम्भे एतत्सर्वं भीत्या कुतूहलेन दृष्टवन्तः यद्यपि, तथापि कालान्तरे सन्तुष्टाः सन्तः ते राक्षसैः सह सम्भाषणम् आरब्धवन्तः। परस्परं साहाय्यं कर्तुम् अपि आरब्धवन्तः।

इदानीम् उग्राक्षस्य दत्तकपुत्रः उग्रदत्तः तस्य अनुयायिनौ रुद्रः अरुद्रः च विंशतिवर्षीयाः। तेषां शरीरे तारुण्यस्य उत्साहः स्फुटं दृश्यते स्म। युद्धविद्यायां शूलायुधप्रयोगे, अश्वारोहणे, धनुर्विद्यायां, लक्ष्यभेदने च ते अतीव निपुणाः आसन्। नैपुण्येन ते परस्परम् अतिशेरते स्म।

पूर्वं ज्वालाद्वीपवासिनां व्याघ्रचर्मधारिणां द्वारा कपिलपुरे यः संक्षोभः उत्पादितः आसीत् तं विषयम् उग्राक्षः विस्तरेण तान् निवेदितवान्।

"युक्तं समयं प्रतीक्षमाणः इदानीम् एतत् सर्वं निवेदितवान् अस्मि। व्याघ्रचर्मधारिणा विषये सदा जागरूकता भवतु" इति उक्तवान् उग्राक्षः।

पुनः अन्यदा उग्राक्षः उग्रदत्तम् उक्तवान्- "एषु दिनेषु अपि ते क्रूराः व्याघ्रचर्मधारिणः भयङ्करपक्षिणः आरुह्य रात्रिसमये




अस्माक राज्यस्य उपरि तदा तदा सञ्चरन्ति। गतेभ्यः पञ्चदशवर्षेभ्यः तैः अस्माकं राज्ये कोऽपि संक्षोभः न आचरितः। तथापि तेषां चलनवलनं जागरूकतया परिशीलनीयम् एव। यतः तेषां नायकः करवीरः अस्माकं बन्धनात् आत्मानं विमोच्य पलायनं कृतवान्। द्रोहिणः नागवर्मणः साहाय्यं तस्य। अतः तेभ्यः दुष्टेभ्यः अपायः सम्भविष्यति इति तु निश्चितम् एव" इति।

उग्राक्षस्य वचनानि उग्रदत्तस्य अन्तरङ्गे दृढं स्थितानि। सः चिन्तयति- "ज्वालाद्वीपवासिनां शक्तिसामर्थ्यादिकम् इदानीं कथम् अस्ति इति प्रथमं ज्ञातव्यम्। ते व्याघ्रचर्मधारिणः इदानीम् अत्र तत्र रात्रिसमये सञ्चरन्तः सन्ति इत्यस्य अर्थः ते अद्यापि अस्माकं राज्यं न विस्मृतवन्तः इत्येव। एतदर्थं योग्या प्रतिक्रिया शीघ्रम् एव चिन्तनीया। अस्माकं प्रतिक्रियां ते जन्मनि कदापि न विस्मरेयुः" इति।

उग्रदत्तः रुद्रेण अरुद्रेण च सह उपविश्य एतद्विषये विस्तरेण चर्चितवान्। ते त्रयः अपि सम्भूय एकां योजनां चिन्तितवन्तः।

"तदा तदा दृश्यमानेषु अन्यतरः व्याघ्रचर्मधारी कथञ्चित् ग्रहीतव्यः। तस्य मुखात् ज्वालाद्वीपस्य सद्यःकालीना परिस्थितिः ज्ञातव्या। तेन नागवर्मणः करवीरस्य च बलाबलं स्पष्टतया ज्ञायते। तावत् ज्ञातं चेत् अर्धं कार्यं साधितम् इव" इति तेषां विचारः।

"व्याघ्रचर्मधारी कश्चित् सजीवं ग्रहीतव्यः चेत् अरण्यवासिनां पौगणा राक्षसानां च सहकारः अत्यावश्यकः। पारितोषिकस्य आशां यदि प्रदर्शयेम तर्हि ते अहोरात्रं रक्षणकार्यं कृत्वा सर्वान् अपायान् सम्मुखीकृत्य एकं वा व्याघ्रचर्मधारिणं गृह्णीयुः एव। अग्नितः तेषां पक्षिणां भयम् इत्येषः अंशः अत्र न विस्मर्तव्यः।"

एवं चिन्तयित्वा उग्रदत्तः उग्राक्षाय स्वकीयं विचारं निवेदितवान्। उग्राक्षः सन्तोषं प्रकटयन् तं प्रोत्साहितवान्। "व्याघ्रचर्मधारिणं यः बद्ध्वा आनेष्यति तस्मै दशसहस्रं सुवर्णनाणकानि दीयन्ते इति उद्घोषणं कारयतु। तेन न काऽपि हानिः। अस्माकं भूगृहे सुवर्णं तु राशिरूपेण पतितम् अस्ति। अस्मदीयाः राक्षसाः अपि मानवाः इव



जीवन्तः सन्ति। मानवजीवने सुवर्णं बहु उपकरोति'' इति उक्तवान् च।

उग्रदत्तः अनन्तरदिने एव अरण्ये जनवसतिस्थलेषु, राक्षसानां वसतिभूतेषु उपत्यकाप्रदेशेषु च उद्घोषणं कारितवान्। एतस्य परिणामतः व्याघ्रचर्मधारि-सम्बन्धिन्यः सर्वाः वार्ताः उग्रदत्तेन तत्क्षणे प्राप्यन्ते स्म। मानवाः राक्षसाः च विशेषावधानेन व्याघ्रचर्मधारिणां व्यवहारं परिशीलयन्तः आसन्। ते व्याघ्रचर्मधारिणः रात्रौ भयङ्करपक्षिणः आरुह्य तत्प्रदेशे सञ्चरन्ति स्म, किन्तु कुत्रापि भूमौ न अवतरन्ति स्म।

एतादृशीभिः शुष्कवार्ताभिः उग्रदत्तः निरुत्साहम् अनुभवति। कुतन्त्रिणः ज्वालाद्वीपवासिनः किमर्थं वा रात्रौ एव सञ्चरन्ति? इति एतत् न जानाति उग्रदत्तः। 'प्रजासु कोऽपि यथा न जानीयात् तथा ते कुत्रापि अवतरेयुः वा?' इति तस्य सन्देहः। 'एवम् अवतरन्ति चेत् ते किं कुर्युः? भूमौ स्फोटकं किमपि स्थापयेयुः वा? अथवा अन्यत् किमपि कुर्वन्तः स्युः वा? विना कारणं ते एवं सञ्चारं कर्तुं न अर्हन्ति खलु?'

'एषः सन्देहः परिहरणीयः चेत् मया एव कार्यप्रवृत्तेन भवितव्यम्। रात्रिसमये अरण्ये सञ्चारः करणीयः। उन्नते स्थले निलीय परिशीलनीयम्' इति निश्चितवान् उग्रदत्तः। तस्य सहचरौ रुद्रः अरुद्रः च तेन सह आगन्तुं सन्तोषेण सिद्धौ जातौ।

एकदा सूर्योदयसमये ते त्रयः अपि दुर्गात् निर्गत्य अश्वम् आरुह्य प्रस्थितवन्तौ। जनवसतिप्रदेशम् अतिक्रम्य अरण्ये सञ्चरन्तः ते परितः परिशीलयन्तः मध्यरात्रपर्यंतं प्रयाणं कृतवन्तौ।

निरन्तरप्रयाणेन ते त्रयः अपि श्रान्ताः। प्रातःकालपर्यन्तं वृक्षस्य अधः विश्रान्तिः स्वीकरणीया इति निश्चित्य ते अश्वात् अवतीर्णवन्तः। अश्वान् एकत्र बद्ध्वा समीपस्थस्य उन्नतस्य देवदारुवृक्षस्य समीपं गतवन्तः ते।

तदा ते अकस्मात् आश्चर्यचकिताः। यतः वृक्षस्य अग्रभागः तीव्रेण तेजसा प्रकाशते! तेजसः तैक्ष्ण्येन तेषां नेत्राणि क्षणकालं पिहितानि।

प्रथमम् एतत् दृश्यम् उग्रदत्तः एव दृष्टवान्। सः– "अहो हो! भयङ्करपक्षी! तम् आरूढवतः व्याघ्रचर्मधारिणः हस्ते तेजः-प्रकाशकं किमपि वस्तु अस्ति!" इति उद्गारं प्रकटितवान्।

रुद्रः अरुद्रः चापि शिरः उन्नीय दृष्टवन्तौ।

किन्तु अत्रान्तरे भयङ्करपक्षी ततः उड्डीय पश्चिमायां दिशि गतः आसीत्। पक्षिणः गमनमार्गे प्रकाशः प्रसरति इति ते दृष्टवन्तः।

"अहम् एतं वृक्षम् आरुह्य वयं कुत्र स्मः इति पश्यामि। पक्षिणः मार्गः अपि तेन ज्ञायते" इति उक्तवान् रुद्रः।

उग्रदत्तः अरुद्रः च एतत् अङ्गीकृत्य शिरः चालितवन्तौ।



रुद्रः अनायासेन देवदारुवृक्षम् आरूढवान्। परितः परिशील्य क्षणाभ्यन्तरे अधः आगतवान् च।

किमिति प्रष्टुम् उद्युक्तौ अरुद्रः उग्रदत्तः च।

ततः पूर्वम् एव रुद्रः उक्तवान्- "समीपे एव एकं दुर्गम् अस्ति। दुर्गस्य अन्तः प्रकाशः न दृश्यते। दुर्गभित्तेः उपरि रक्षक भटाः अपि न दृश्यन्ते। पक्षिणम् आरूढवता प्रसार्यमाणस्य प्रकाशस्य साहाय्येन अहम् एतत्सर्वं ज्ञातवान्। पक्षी दुर्गम् एव प्राविशत् प्रायः" इति।

रुद्रस्य वचनं सकुतूहलं श्रुत्वा पृष्टवान् उग्रदत्तः- "एवं तर्हि एतस्य दुर्गस्य अन्तः व्याघ्रचर्मधारिणः निवसन्ति इति किल भवतः अभिप्रायः?" इति।

"तथा निश्चयेन वक्तुं न शक्यते। किन्तु तथा स्यात् अपि। दुर्गस्य अन्तः ये सन्ति तेषु एकोऽपि मया न दृष्टः। ते स्वयं व्याघ्रचर्म–धारिणः उत तेषां साहाय्यकाः इत्यपि न ज्ञायते। वस्तुतः तु सः व्याघ्रचर्मधारी दुर्गस्य अन्तः एव अवतीर्णः, उत तत्समीपे कुत्रापि अवतीर्णः इत्येव मया सुस्पष्टं न दृष्टम्। यदा तेन अवतरणं कृतं तदा दुर्गस्थेन केनापि विरोधः न आचरितः इति तु सत्यम् एव" इति उक्तवान् रुद्रः।

रुद्रस्य विचारानुगुणम् एव उग्रदत्तस्य अपि मनः चिन्तयति।

'आत्मनः दुर्गस्य विषये एतावतीं निर्लक्ष्यतां प्रदर्शयन् एषः कपिलपुरसामन्त–



राजः कः स्यात्? प्रातःकालानन्तरम् एव एतत् ज्ञायेत।। प्रातःकालानन्तरं प्रथमं तत् दुर्गं गत्वा सः सामन्तराजः व्याघ्रचर्मधारिणां विषये सूचनीयः। व्यवहारे अप्रमत्तता भवतु इति स्मारणीयः सः" इति आलोचितवान् उग्रदत्तः।

अनन्तरं अतीव श्रान्ताः ते त्रयः अपि निद्रावशतां गताः।

यदा अरुणोदयः जातः तदा अरण्यस्थाः पक्षिणः प्राणिनः च कलरवादिकम् उत्पादितवन्तः। तेषाम् अश्वाः अपि उच्चैः हेषारवं कुर्वन्तः खुरैः शब्दम् उत्पादितवन्तः। एतत्सर्वं श्रुतवतां उग्रदत्त-रुद्रारुद्राणां जागरणं जातम्।

तत्समये समग्रः परिसरः कोमलेन प्रकाशेन व्याप्तः आसीत्। आकाशचुम्बिषु वृक्षेषु स्थिताः कपयः वृक्षात् वृक्षं प्रति उत्प्लवन्तः चेष्टासु रताः आसन्। चित्रविचित्राः पक्षिणः कलरवम् उत्पादयन्तः उड्डयन्ते स्म। लघुप्रणिनः केचन निरातङ्कं सञ्चरन्तः आसन्।

"अस्माकं निवासस्थानस्य अपेक्षया अपि एषः प्रदेशः सुन्दरः अस्ति। एतादृशः प्रदेशः कश्चन अस्ति इति अहं न जानामि स्म एव" इति उक्तवान् उग्रदत्तः।

"अतः एव एतादृशे स्थले दुर्गं निर्मितवान् कश्चन माण्डलिकः। ज्वालाद्वीपवासिनः अपि यथा न जानीयुः तथा स्थातुम् एषः उचितः प्रदेशः इति मम अभिप्रायः" इति उक्तवान् रुद्रः।

व्याघ्रचर्मधारिणां नामश्रवणमात्रेण उग्रदत्तः उत्थितवान्।

अरुद्रेण सह उत्थितः रुद्रः पृष्टवान्- "तत् दुर्गं प्रति एव किल गमनम्? अश्वान् अत्र आनयामि वा?" इति।

"तत् दुर्गं प्रति गन्तुम् अश्वाः अपेक्षिताः वा? तावद्दूरे अस्ति वा दुर्गम्? यावच्छक्यम् अस्माभिः निलीय गन्तव्यम्। अश्वाः सन्ति चेत् एतत् कष्टसाध्यम् एव भवेत्" इति स्वाशयं प्रकटितवान् उग्रदत्तः।

"दुर्गं योजनदूरे स्यात्। अन्धकारे वृक्षम् आरुह्य दृष्टम् इत्यतः सन्देहः। सार्धैकयोजनम् अपि गन्तव्यं भवेत्" इति उक्तवान् रुद्रः।

"यदि तंथा सन्देहः स्यात् तर्हि अश्वम् आरुह्य गमनम् एव उचितं भवेत्" इति सूचितवान् उग्रदत्तः।

त्रयः अपि अश्वसमीपं गतवन्तः। यावत् ते अश्वानां रज्जुं शिथिलीकुर्वन्तः आसन् तावना तैः अनतिदूरतः कश्चन आर्तस्वर श्रुतः।

सः स्वरः स्त्रियः ध्वनिम् अनुकरोति स्म। अकस्मात् श्रुतेन स्वरेण ते आश्चर्यकिताः।

"कापि स्त्री सङ्कटे पतिता अस्ति इति भाति" इति उक्तवान् रुद्रः।

"आम्, त्वरया तत्र गच्छाम" इति उक्त्वा खड्गं हस्ते स्वीकुर्वन् वेगेन अग्रे पदानि स्थापितवान् उग्रदत्तः।

त्रयः अपि ध्वनेः दिशि धावितवन्तः। किञ्चिद्दूरं यदा गतं तदा वृक्षस्य पृष्ठतः स्थिताः केचन पुरुषाः तैः दृष्टाः। इतोऽपि अग्रे यदा गतं तदा पट्टवस्त्रालङ्कृता सुवर्णाभरणभूषिता काचित् तरुणी दृष्टा। चत्वारः व्याघ्रचर्मधारिणः तां ग्रहीतुं प्रयतमानाः आसन्।

दर्शनमात्रेण एव एतैः व्याघ्रचर्मधारिणाम् अभिज्ञानं प्राप्तम्। तरुण्याः दास्यः राजकुमारिम् आकर्षन्त्यः पलायने रताः आसन्। ताः 'रक्षन्तु, रक्षन्तु' इति आक्रोशनम् अपि कुर्वन्ति स्म।

"भीतिः मास्तु। एते वयम् आगताः" इति वदन्तः उग्रदत्तः रुद्रः अरुद्रः च वेगेन अग्रे धावितवन्तः।

तत्क्षणे एव वृक्षाणां शाखासु निलीय उपविष्टाः केचन व्याघ्रचर्मधारिणः युगपत् भूमौ अवतीर्णाः।

उग्रदत्तेन रुद्रेण अरुद्रेण च एतत् आक्रमणं निरीक्षितं न आसीत्। यावत् ते आत्मनि स्थैर्यं पूरयन्तः आसन् तावता व्याघ्रचर्मधारिणः एतान् निरायुधान् कृतवन्तः। रज्ज्वा बद्ध्वा भयङ्करपक्षिणां समीपं नीतवन्तः च।

'अविचिन्तिता एषा आपत् क्षणाभ्यन्तरे कथं प्रवृत्ता!' इति आश्चर्यभावस्य विनिमयं दृष्ट्या एव कुर्वन्तः उग्रदत्तादयः महान्तं खेदम् अनुभूतवन्तः।

(अनुवर्तते)






# स्वार्थचिन्तनम्

शववहनविषये नूतनं विक्रमं स्थापयितुम् इच्छन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवम् अधः आनीय स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्- "अये राजन्! पिशाचादीनां निवासस्थानभूते अस्मिन् श्मशाने मानवः भवान् निर्भयेन गच्छति खलु! किम् एतत् कार्यं केवलम् आत्महितार्थम्, उत लोकहितार्थम्? एवं तदर्थं पृच्छामि यत् स्वार्थप्रेरितस्य श्रमस्य दैवसाहाय्यं न भवति। तादृशः श्रमः पदे पदे वैफल्यं सम्मुखीकरोति। अत्र उदाहरणरूपेण एकां कथां श्रावयामि। कथां शृण्वतः गच्छतः भवतः मार्गायासः अपि परिहृतः भवेत्" इति।

अनन्तरं वेतालेन कथा आरब्धा –

पूर्वं केदारनामके ग्रामे राजारामः नाम कृषिकः पत्न्या सह निवसति स्म। तस्य पुत्री सुवर्चला। 'विवाहानन्तरम् अपि एषा मम गृहे

वेतालकथा



एव भवेत्। अतः अनाथः एव जामातृत्वेन अङ्गीकरणीयः' इति चिन्तयति स्म राजारामः। एतदर्थम् एव सः बाल्ये एव मातापितृप्रीतितः वञ्चितं मातुलपुत्रं सागरं स्वगृहे एव पोषितवान्।

सागरः स्पष्टवादी। अन्याय्यादिकं कदापि न सहते। ग्रामाधिकारिणः विषये सागरस्य असमाधानम् आसीत्। यतः ग्रामाधिकारी सेनापतेः वचनानुगुणं व्यवहरन् ग्रामीणान् जनान् बहुधा पीडयति स्म। स्वार्थप्रेरितम् एतत् कृत्यं सोढुम् असमर्थः सागरः एकस्मिन् दिने साक्षात् राजधानीं गत्वा महाराजाय ग्रामाधिकारिणः व्यवहारं सविस्तरं निवेदितवान्।

एतं विषयं ग्रामाधिकारी कथमपि ज्ञातवान् एव। सः सागरस्य उपरि 'कोशागारं लुण्ठयितुं कुतन्त्रं रचयन् अस्ति' इति मिथ्यारोपं कृत्वा तं बन्धने स्थापितवान्। महाराजस्य पुरतः प्रस्तुतीकृतवान् च।

राजा विचारणां विनैव भटान् आज्ञापितवान् - "राजद्रोही एषः सागरः अरण्ये तत्र बद्धव्यः यत्र व्याघ्रचित्रकादयः क्रूरप्राणिनः सञ्चरन्ति" इति।

राजाज्ञानुसारं भटाः सागरम् अरण्यं नीतवन्तः। घोरे अरण्ये वटवृक्षे तं दृढं बद्ध्वा प्रतिगतवन्तः च।

इतः परं कोऽपि व्याघ्रः वृकः वा मां खादिष्यति इति चिन्तयन् सागरः जीविताशां परित्यक्तवान् आसीत्। एवं मरणं प्रतीक्षमाणः सः "पिपासा! पिपासा!" इति आर्तनादं श्रुतवान्।

किङ्कर्तव्यतामूढः सः आश्चर्येण इतस्ततः पश्यन् आसीत्। तदा काचित् पिशाचा तस्य पुरतः आगत्य - "अये मानव! पिपासा! पिपासा! मम पिपासां निवारयतु" इति कष्टेन उक्तवती।

जीविताशाम् एव परित्यक्तवतः सागरस्य पिशाचदर्शनतः भयं कुतः? सः पिशाचाम् उक्तवान् - "समीपे एव प्रवहन्त्याः नद्याः कलरवः स्पष्टं श्रूयते। पुनः अपि जलं पृच्छति किल? मम का परिस्थितिः इति न पश्यति वा भवती?" इति।

तदा पिशाचा उक्तवती - "भोः, अहं शापग्रस्ता अस्मि। मम हस्तस्पर्शमात्रेण जलं

शुष्यति। भवन्तं बन्धविमुक्तं करोमि। कृपया मम पिपासां निवारयतु" इति। अनन्तरं सागरं बन्धनात् मोचयित्वा घटम् एकं सृष्ट्वा सागराय दत्तवती।

सागरः तेन घटेन जलम् आनीय पिशाचायाः मुखे स्थापितवान्। एवं चतुर्वारं नदीं गत्वा जलम् आनीय पायितवान् सागरः। तेन पिशाचायाः पिपासा निवृत्ता अभवत्।

एतदनन्तरं पिशाचा सागरं पृष्टवती - "भवतः एतादृशी कष्टपरिस्थितिः किमर्थम् आगता?" इति।

सागरः प्रवृत्तं सर्वं निवेद्य पिशाचाम् उक्तवान् - "अहं ग्रामाधिकारिणः विरोधं स्वार्थनिमित्तं न कृतवान्। ग्रामीणानां हितम् इच्छन् राज्ञे सर्वं निवेदितवान्। अतः एवं प्रवृत्तम्। जीवने साधनीयम् इतोऽपि बहु अस्ति। तेनैव अहं जीवितः। ग्रामहितार्थं सः ग्रामाधिकारी दण्डनीयः एव। भवती अत्र किमपि साहाय्यं कर्तुं शक्नुयात् वा?" इति।

पिशाचा परमसन्तोषेण - "साधु! मानव साधु! स्वार्थं परित्यज्य लोकहितार्थं कार्यं कर्तुम् उद्युक्तस्य भवतः साहाय्यम् अवश्यं करिष्यामि" इति उक्त्वा आकाशे हस्तं चालितवती। तदा तस्याः हस्ते कानिचन आभरणानि आगतानि। तानि सागराय यच्छन्ती सा - "एतानि युवराज्ञ्याः आभरणानि। भवान् एतेषां साहाय्येन स्वबुद्धिबलात् प्रतीकारं साधयतु" इति उक्त्वा अदृश्यतां गतवती।



सागरः आभरणानि स्वीकृत्य ग्रामं प्रत्यागतवान्। ग्रामाधिकारिणः गृहस्य पृष्ठतः गत्वा तानि आभरणानि तदीयप्राकारस्य अन्तः क्षिप्तवान् च।

अनन्तरदिने ग्रामाधिकारिणः पत्नी तानि आभरणानि दृष्टवती। सन्तुष्टा सा 'एतानि कुतः किमर्थम् आगतानि स्युः?' इत्यादिकं पूर्वापरं किमपि अनालोच्य तानि धृतवती। ग्रामीणानां पुरतः गर्वेण सञ्चरितवती च।

राजभवने अदृश्यतां गतानाम् आभरणानाम् अन्वेषणे रताः गूढचारिणः ग्रामाधिकारिणः पत्न्याः शरीरे स्थितानाम् आभरणानां परिचयं प्राप्तवन्तः। एतां वार्तां त्वरया गत्वा महाराजाय निवेदितवन्तः च।

राजा भटान् सम्प्रेष्य ग्रामाधिकारिणम् आनाय्य कारागारे स्थापितवान्। सेनापतिः



ग्रामाधिकारिणः आत्मीयः स्नेहितः खलु? अतः सः महता प्रयत्नेन ग्रामाधिकारिणं बन्धविमुक्तं कारितवान्।

तेषु दिनेषु राज्ये चौर्यं लुण्ठनं च प्रवृद्धम् आसीत्। चोराणां ग्रहणार्थं महाराजेन कृताः सर्वे प्रयत्नाः विफलाः आसन्। 'सागरः नाशनीयः' इति चिन्तयन् सेनापतिः महाराजसमीपं गत्वा 'चोरग्रहणे सागरः नियोजनीयः' इति सूचितवान्।

एतदनुगुणं राजा भटानां द्वारा सागरं स्वसमीपम् आनाय्य – "भवता दिनत्रयाभ्यन्तरे चोराः ग्रहीतव्याः। एतदर्थं कः उपायः आश्रयणीयः, केन मार्गेण गन्तव्यम् इत्यादिकं भवान् एव चिन्तयतु। दिनत्रयाभ्यन्तरे चोराः मम पुरतः न उपस्थापिताः चेत् भवन्तं शूले आरोपयिष्यामि" इति आज्ञापितवान्।

'राजाज्ञायाः कारणं सेनापतेः कुतन्त्रम् एव' इति चिन्तयन् सागरः साक्षात् अरण्यं गतवान्। तत्र वटवृक्षस्य पार्श्वे पिशाचा पिपासया पीड्यमाना क्रन्दनं कुर्वती आसीत्।

सा सागरं दृष्ट्वा - "भोः मानव! प्रथमं मम पिपासां निवारयतु। अनन्तरं किमपि वक्तव्यम् अस्ति चेत् वदतु" इति उक्तवती।

सागरः पिशाचायाः पिपासां निवार्य प्रवृत्तं सर्वं तस्यै निवेद्य - "प्राणधारणविषये मम चिन्ता नास्ति। प्रजाः चोरेभ्यः पीड्यन्ते यत् तत् निवारणीयम् इति मम इच्छा" इति उक्तवान्।

"भवतः निःस्वार्थगुणः वस्तुतः स्तुत्यर्हः एव। अहम् अवश्यं भवतः साहाय्यं करिष्यामि" इति उक्त्वा पिशाचा समीपस्थात् गुल्मात् व्याघ्रद्वयं बहिः आकृष्य सागरस्य पुरतः स्थापयित्वा - "एतयोः साहाय्येन भवान् चोरान् ग्रहीतुम् अर्हति" इति उक्तवती। ततः अदृश्यतां गतवती च।

व्याघ्रद्वयं दृष्ट्वा सागरः यावत् भीतः, तावता तस्य पुरतः वधूवरौ प्रत्यक्षरूपेण स्थितवन्तौ। वध्वाः शरीरे वोढुम् अशक्यानि अनेकानि आभरणानि आसन्। वरः अपि अमूल्यैः वस्त्रैः आभरणैः च शोभमानः आसीत्।

सागरः ताभ्यां सह प्रस्थितः सन् सायङ्कालसमये राजधान्याः समीपे स्थितायां

धर्मशालायां वसतिं कल्पितवान्।

रात्रेः द्वितीये यामे चत्वारः चोराः धर्मशाला प्रविष्टवन्तः। वध्वाः शरीरे स्थितानाम् आभरणानाम् अपहरणार्थं प्रयत्नं कृतवन्तः। तत्क्षणे वधूवरौ व्याघ्ररूपं धृतवन्तौ। गर्जनं कुर्वन्तौ नखैः चोरान् व्रणितान् कृत्वा बहिः धावितवन्तौ।

एतया आकस्मिकघटनया धर्मशालायाः यजमानः इतरे यात्रिकाः च जागरिताः अभवन्। वेदनाम् अनुभवतः चोरान् ते बद्धवन्तः। सागरेण सह महाराजसमीपं नीतवन्तः च।

'चित्रहिंसया भवतः मारयिष्यामि' इति राजा तान् चोरान् भाषितवान्। तदा चोराः वस्तुस्थितिं निवेदितवन्तः। "वयं ग्रामाधि - कारिणः सेनापतेः च सूचनानुसारम् एवं चौर्यं कुर्वन्तः स्मः। चौर्येण प्राप्ते भागे त्रिषु एकम् अंशं तयोः कृते दद्मः च" इति उक्तवन्तः चोराः।

राजा तद्दिने एव ग्रामाधिकारिणं सेनापतिं च कारागारे स्थापितवान्। सागरं सेनापतिस्थाने नियोजितवान् च।

एतदनन्तरं केषुचित् दिनेषु वर्षाकालः आगतः। तस्मिन् वर्षे अतिवृष्टिः। अहोरात्रं वृष्टिः। नद्यः पूर्णाः। ग्रामाः नदीप्रवाहे निमग्नाः च।

तदा सागरः पिशाचायाः समीपं गत्वा 'अपायात् जनाः रक्षणीयाः' इति प्रार्थितवान्।



एतत् अङ्गीकृत्य पिशाचा सागरेण सह आगतवती। जलमयं प्रदेशं हस्तेन स्पृष्टवती च। तदा तत्रत्यं जलं सर्वथा शुष्कं जातम्। पिशाचा वर्षाकालसमाप्तिपर्यन्तं राजधान्याम् एव आसीत्। अनन्तरं स्ववासस्थानं गतवती च।

एवं समग्रं राज्यम् अपायात् रक्षितवन्तं सागरं महाराजः बहुधा श्लाघितवान्। एतत्परिणामतः सागर-युवराज्ञ्योः विवाहः सवैभवं सम्पन्नः।

केषाञ्चित् दिनानाम् अनन्तरं सागरः पिशाचायाः समीपं गतवान्। पिशाचा तस्य दर्शनमात्रेण कुपिता सती - "अये नराधम! मम प्राणाः निर्गताः चेदपि चिन्ता नास्ति। किन्तु भवादृशानां कृतघ्नानां साहाय्यं न

प्रार्थयामि। मानवानां साहाय्य सर्वथा निष्प्रयोजकम्। इतः परं कदापि मानवानां दृष्टिगोचरा न भविष्यामि" इति उक्त्वा अदृश्या अभवत्।

वेतालः एवं कथां समाप्य अवदत् - "राजन्! 'पिपासानिवारणं जातं चेत् पर्याप्तं, प्रत्युपकाररूपेण यत्किमपि साहाय्यं कर्तुं सिद्धा' इति उक्तवती पिशाचा, यदा सागरः विवाहितः अभवत् तदा किमर्थं साहाय्यं निराकृतवती? 'मत्कारणतः एव एषः महाराजस्य जामाता जातः' इति असूया तस्यां जाता इत्यपि वक्तुं न शक्यते। यतः मानवः उन्नतिं प्राप्नोति चेत् तस्याः का हानिः? किमर्थम् असूया? एवं स्थिते अपि सा किमर्थं 'अहम् इतः परं मानवानां दृष्टिगोचरा कदापि न भविष्यामि' इति उक्तवती? तस्याः कोपस्य किं कारणम्? एतस्य सन्देहस्य उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः एवम् उक्तवान् - "स्वार्थचिन्तनम् अकृत्वा ये लोकहितं चिन्तयन्ति तेषां साहाय्यं पिशाचा करोति इति अंशः तु सुस्पष्टः। सागरः प्रथमवारं यदा पिशाचां दृष्टवान् तदा स्वविषये सर्वं निवेदितवान् एव। राजारामः अनाथं सागरं सम्यक् पोषितवान्, तदीयां विद्याभ्यासव्यवस्थां च कारितवान्। सागरः एव जामातृत्वेन अङ्गीकरणीयः इति विचारः आसीत् खलु राजारामस्य? सागरतः सः बहुधा निरीक्षते। किन्तु प्रवृत्तं किम्? सागरः पूर्वतनं सर्वं विस्मृत्य स्वार्थसम्पादनार्थं युवराज्ञीं परिणीतवान्। एतम् अंशं पिशाचा ज्ञातवती। सागरे स्वार्थभावना प्रविष्टा इति ज्ञात्वा सा साहाय्यं निराकृतवती। 'इतः परं मानवानां दृष्टिगोचरा न भविष्यामि' इति उक्त्वा सा अदृश्या अभवत् खलु? तेन ज्ञायते यत् इतः पूर्वं सागरसदृशाः बहवः मानवाः तया कृतं साहाय्यं स्वार्थाय उपयुक्तवन्तः इति। एतम् अंशं बुद्धिमान् यः कोऽपि ज्ञातुं शक्नोति" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।






# स्वजनपक्षपातः

काञ्चनदेशं कुमारवर्मा परिपालयन् आसीत्। सः कुशाग्रमतिः। यद्दिने सः सिंहासनम् आरूढवान् तद्दिनतः राजोद्योगिनां कार्यवैखरीं परिशीलयन् एव आसीत्। राजा एवं सुसूक्ष्मं परीक्षां कुर्वन् अस्ति इति कोऽपि न जानाति स्म।

एकदा कुमारवर्मा राजोद्याने विहरन् आसीत्। तदा सः आलवालं निर्माय जलेन पुष्पसस्यानि सिञ्चन्तं कञ्चित् कर्मकरं दृष्टवान्।

तस्य कार्यकरणरीतिं दृष्ट्वा एव राजा ज्ञातवान् यत् उद्यानरक्षणकार्ये एतस्य परिणतिः नास्ति इति।

कुमारवर्मा तस्य कर्मकरस्य समीपं गत्वा पृष्टवान्- "भवन्तम् इतः पूर्वम् अत्र कदापि न दृष्टवान् अहम्। पूर्वं यः कार्यं करोति स्म सः कुत्र?" इति।

"प्रभो! सः सर्पदंशनकारणतः कार्यं कर्तुम् असमर्थः जातः। अतः उद्यानपालकेन अहम् अत्र नियुक्तः अभवम्" इति उक्तवान् सः कर्मकरः।

"अत्र आगमनतः पूर्वं भवान् कीदृशं कार्यं कुर्वन् आसीत्?" इति पृष्टवान् राजा।

"उद्यानपालकस्य गृहे तिष्ठन् लघुलघुकार्याणि कुर्वन् आसं महाप्रभो!" इति विनयेन उक्तवान् सः।

कुमारवर्मा पुनः किमपि न पृष्टवान्। मौनं प्रासादं प्रविष्टवान्।

अनन्तरदिने कुमारवर्मा नगरपालकं, गजशालाधिपतिं राजप्रासादप्रमुखं च स्वसमीपम् आहूय- "अहम् अन्यम् एकम् अङ्गरक्षकं नियोजयितुम् इष्टवान् अस्मि। देहबलेन सहैव यस्य बुद्धिबलं, साहसबुद्धिः, युक्तायुक्ततानिर्णयक्षमता च अस्ति तादृशः मह्यम् अपेक्षितः। भवतां परिचितेषु एतादृशः यदि कोऽपि स्यात् तर्हि सूचयन्तु" इति उक्तवान्।

अनन्तरं ते त्रयः अपि सप्ताहाभ्यन्तरे एव

महाराजम् एकान्ते दृष्ट्वा महाराजेन उक्तैः गुणैः सहितान् अङ्गरक्षककार्ये समर्थान् द्वित्रान् आनीय प्रदर्शितवन्तः।

कुमारवर्मा तान् उद्दिश्य द्वित्रान् सामान्यान् प्रश्नान् पृष्टवान्। अनन्तरं तान् प्रति–प्रेषितवान् च।

अनन्तरदिने कुमारवर्मा मन्त्रिणम् इतरान् मुख्यान् राजोद्योगिनः च एकत्र मेलितवान्। उक्तवान् च- "यदा अहम् अङ्गरक्षकं नियोक्तुम् इच्छामि इति ज्ञातं तदा केचन प्रमुखाः स्वपरिचितम् एतदर्थं दक्षं सूचयन्तः मत्समीपम् आनीतवन्तः। वस्तुतः तु अहम् अङ्गरक्षकं नियोक्तुं न इच्छामि एव। उन्नतस्थाने स्थितानाम् अधिकारिणां व्यवहारस्य परीक्षार्थं मया एवं कृतम् आसीत्" इति।

कुमारवर्मणः वचनं श्रुत्वा सर्वे आश्चर्यचकिताः।

तदा मन्त्री मङ्गलसेनः- "प्रभो! उन्नताधिकारिणां परीक्षा कृता इति तु ज्ञातम्। एवं परीक्षार्थं किं कारणम् इति तु न ज्ञातम्" इति उक्तवान्।

कुमारवर्मा मन्दहासं प्रकटयन् नूतनतया नियुक्तस्य उद्यानकर्मकरस्य कार्ये अदक्षतां निवेदयन्- "यस्य उद्यानकार्ये सर्वथा अनुभवः नास्ति सः उद्यानपालकस्य परिचयकारणतः उद्याने कार्यं प्राप्तवान्। एतादृशस्य कार्येण उद्यानस्य गतिः का भवेत् इति न पुनः वक्तव्यम्" इति उक्तवान्। उद्यानपालकः लज्जया शिरः अवनमय्य स्थितवान्।

कुमारवर्मा क्षणकालानन्तरं पुनः उक्तवान्- "अल्पस्थाने स्थितः उद्यानपालकः अपि स्वजनपक्षपातेन असमर्थाय शासकीयम् उद्योगं दापयति। एवं चेत् उन्नतस्थाने स्थिताः किं कुर्वन्तः स्युः इति ज्ञातुं शक्यते एव किल? अतः अद्य आरभ्य कुत्रापि यदि उद्योगस्थानं रिक्तं स्यात् तर्हि सा वार्ता सडिण्डिमघोषं प्रसारणीया, येन सर्वे एतां वार्तां ज्ञातुं शक्नुयुः" इति।

अनन्तरकाले सर्वे अधिकारिणः एतम् एव क्रमम् अनुसृतवन्तः। कुमारवर्मणः शासन–काले स्वजनपक्षपातः लुप्तः अभवत्।



अस्माकं देशस्य वैशिष्ट्यानि—

# गोल गुम्बज्




दक्षिणभारते स्थितेषु अपूर्वभवनेषु महम्मद् आदिल् षा शवस्थानं गोलगुम्बज् सुप्रसिद्धम्। एतत् भवनं आदिल् षा स्वयं निर्मापितवान्। अर्धगोलाकारक-शिखरयुतस्य एतस्य चतसृषु दिक्षु अपि शिखराणि सन्ति। अष्ट- भुजाकारकैः स्तम्भैः शोभमानम् एतत् भवनं द्रष्टृणां मनः आकर्षति।




टर्कीशासकस्य कनिष्ठपुत्रेण युसूफ् आदिल् षा महोदयेन आदिल्वंशः स्थापितः। मुरादस्य मरणानन्तरं परम्परागत-सम्प्रदायानुगुणं ज्येष्ठपुत्रं विहाय अन्ये सर्वे पुत्राः रहसि मारणीयाः आसन्।

'सिंहासनार्थं स्पर्धा मा भवतु' इति उद्देशेन एवं क्रियते इति मन्त्रिणः युसूफ्मातरं निवेदितवन्तः। पुत्रात् वञ्चिता भवितुं सा न इच्छति। अतः सा पुत्ररक्षणार्थं विश्वासपात्राणां सेवकानां साहाय्येन एकम् उपायं चिन्तितवती।





तस्याः विश्वासपात्रेषु अन्यतमः विदेशार्थं प्रस्थितानां वणिजां वृन्दं प्रविष्टवान्। युसूफ्समानाकारकम् एकं सेवकं क्रीत्वा युवराजवेषं धारयित्वा राजभवने स्थापितवान् सः। तस्याम् एव रात्रौ युसूफ् इति चिन्तयन्तः घातुकाः तं सेवकम् एव मारितवन्तः।

नगरे 'युसूफ् मृतः' इति वार्ता प्रसृता। तत्सन्दर्भे वास्तविकः युसूफ् वणिजैः सह गच्छन् भारतं प्राप्तवान्। वणिक्प्रमुखः एव प्रीतः सन् युसूफ् कुमारस्य शिक्षणार्थं व्यवस्थां कृतवान्।






अनन्तरकाले रमणीयरूपः युसूफ् बीदरशासकस्य आस्थानं प्रविष्टवान्। क्रमेण उन्नतानि स्थानानि अलङ्कुर्वन् अन्ते बिजापुरनगरस्य गवर्नर् अभवत्। १४८९ तमे वत्सरे आदिल् षा इति नाम्ना आत्मानं ख्यापयन् बिजापुरं स्वतन्त्र–मण्डलत्वेन घोषितवान्।

आदिल षा अपूर्वाणि अनेकानि भवनानि निर्मापितवान्। तेषु जगत्प्रसिद्धं गोलगुम्बज् अपि अन्यतमम्। परिमाणेन एतस्य भवनस्य जगति द्वितीयं स्थानम्। एतस्य अन्तः एकः चलति चेदपि सैन्यः एव चलति इव शब्दः श्रूयते।





बिजापुर नगरे स्थितम् अपरम् अपूर्वं 'भवनं जामी मस्जिद्। अलि आदिल् षा काले एतस्य निर्माणकार्यम् आरब्धम्। एतस्य भवनस्य वैशिष्ट्यं यत् एतस्मिन् २२५० भक्ताः युगपत् एव उपविश्य प्रार्थनां कर्तुं शक्नुवन्ति।

नगरस्य पश्चिमायां दिशि 'मालिक्-इ-मैदान्' नामिका महाकारिका शतघ्नी अस्ति। बिजापुरनगरे इतरत्र च प्रवृत्तेषु अनेकेषु युद्धेषु एतस्याः शतघ्न्याः उपयोगः कृतः आसित्।





अफझलखाननिमित्तं निर्मिते शवस्थाने तदीयं भौतिकं शरीरं न स्थापितम्। बिजापुरशासकस्य परतया वञ्चना–मार्गेण शिवाजीमहाराजं मारयितुं प्रयत्नं कृतवान् अफझलखान्। दुष्टस्य एतस्य वञ्चनातन्त्रं पूर्वम् एव जानन् शिवाजी स्वकीयैः 'व्याघ्रनखैः' तं विदार्य मारितवान्। खानस्य शवं तत्रैव निखानितं च।



# स्मरणिका

सूर्यपुरग्रामः पर्वतस्य उपत्यकायाम् आसीत्। फलोद्यानैः वृक्षवाटिकाभिः च स च प्रदेशः अतीव रमणीयतया शोभते स्म। ग्रामस्य वातारणम् आरोग्याय अनुकूलकरः इत्यतः धनिकाः अस्वास्थ्यसमये तत्र आगत्य कानिचन दिनानि तिष्ठन्ति स्म। यदा पूर्णतः स्वस्थाः भवन्ति तदा प्रतिगच्छन्ति स्म।

एतस्मिन् ग्रामे नटवरः नाम कश्चित् आसीत्। तस्य स्वकीयं गृहादिकं किमपि नास्ति। अतः सः स्वास्थ्यसम्पादनार्थम् अन्यप्रदेशेभ्यः ये धनिकाः आगच्छन्ति तेषां सेवां करोति।

यदा ते प्रतिगन्तुम् उद्युक्ताः भवन्ति तदा एषः प्रार्थयते- "श्रीमन्! अहं भवन्तं सदा यथा स्मरेयं तथा किमपि दत्त्वा गच्छतु" इति।

ते धनिकाः नटवराय किञ्चित् धनम् अमूल्यं वस्तु वा दत्त्वा गच्छन्ति स्म।

एकदा एतं ग्रामं केशवचक्रवर्ती इति कश्चित् धनिकः गृहस्थः आगतवान्। नटवरः यदा यदा आवश्यकं तदा सर्वदा तस्य साहाय्यं कृतवान्।

प्रतिफलरूपेण केशवचक्रवर्ती तत्तत्सन्दर्भे एव कृतकार्यानुगुणं धनं ददाति स्म।

केषाञ्चित् दिनानाम् अनन्तरं केशवचक्रवर्ती नटवरम् उक्तवान्- "भवतः ग्रामस्य वातावरणप्रभावतः अहं पूर्णतः स्वस्थः जातः। इतः परम् अचिरात् एव मम ग्रामं प्रतिगमिष्यामि" इति।

नटवरः पूर्वतनाभ्यासानुसारम् उक्तवान्- "अस्तु श्रीमन्! भवादृशाः धनिकाः एतं ग्रामं तदा तदा आगच्छन्ति। मम सेवया तृप्ताः ते स्मरणार्थम् इति किमपि दत्त्वा गच्छन्ति। मम हस्ते स्थितम् अङ्गुलीयकं, रजतकङ्कणं, गृहे स्थिता काष्ठपेटिका इत्यादयः उदारिभिः दत्ताः एव" इति।



तत् श्रुत्वा केशवचक्रवर्ती उक्तवान्- "अहं तु एतेषां सर्वेषाम् अपि अपेक्षया श्रेष्ठम् उपायनं दास्यामि भवते" इति।

एतेन नटवरः अतीव सन्तुष्टः। सः केशवचक्रवर्तिनः निर्गमनदिनम् एव प्रतीक्षमाणः आसीत्।

एकदा नटवरः कार्यनिमित्तं पार्श्वग्रामं गतवान्। प्रत्यागमनार्थं चत्वारि दिनानि लग्नानि।

किन्तु अत्रान्तरे केशवचक्रवर्ती ग्रामं त्यक्त्वा निर्गतवान् आसीत्। एतत् ज्ञातवतः नटवरस्य आश्चर्यं खेदः च।

एतदनन्तरं कानिचन वर्षाणि अतीतानि। नटवरः वृद्धः सञ्जातः। एकदा सः कस्यचित् गृहस्य पुरतः विश्रान्त्यर्थं भित्तिम् आलम्ब्य उपविष्टवान् आसीत्।

तदा कश्चन धनिकः अश्वशकटेन आगत्य नटवरं परीक्ष्यादृष्ट्या पश्यन् पृष्टवान्- "भोः, विश्रान्त्यर्थम् अहम् एतं ग्रामम् आगतवान्। भाटकार्थम् उपलभ्यमानः समीचीनः प्रकोष्ठः कोऽपि अत्र कुत्रापि अस्ति वा?" इति।

नटवरः झटिति उत्थाय- "प्रकोष्ठः भाटकार्थम् अस्ति वा न वा इति अन्तस्थः यजमानः एव प्रष्टव्यः" इति धनिकं सूचितवान्।

"भवान् इदानीं किं कार्यं कुर्वन् अस्ति?" इति कुतूहलेन पृष्टवान् धनिकः।

एतत् श्रुत्वा निरुत्साहपूर्णेन स्वरेण उक्तवान् नटवरः- "किं करोमि इदानीम्? शरीरस्य शक्तिः क्षीणा जाता। तत्कारणतः कार्येषु अज्ञाततया एव कोऽपि लोपः भविष्यति। आलस्यं वर्धते। चिन्तनानुगुणं शरीरं न सहकरोति। न उत्साहः, न वा कार्यदक्षता। अतः कोऽपि मां किमपि कार्यं न वदति। किन्तु यदा अहं यौवने आसं तदा बहूनां साहाय्यं कृतवान्। बहवः धनिकाः विश्रान्त्यर्थम् एतं ग्रामम् आगच्छन्ति स्म। ते इतः निर्गमनसमये ज्ञापकार्थं किमपि दत्त्वा गच्छन्ति स्म। इदानीं कालः परिवृत्तः। तादृशः उदारी कोऽपि न दृश्यते। आयः कोऽपि नास्ति। कथञ्चित् जीवनं प्रचलति" इति।

"पूर्वम् अत्र आगतेषु दातुम् अनिच्छन्, दानं विस्मृत्य वा कोऽपि न गतवान् वा?" इति पुनः पृष्टवान् सः धनिकः।

नटवरः पूर्वतनं प्रसङ्गं पुनः अपि स्मरन् क्षणकालस्य मौनानन्तरम् उक्तवान्- "आम्, एकं तादृशं स्मरामि। तस्य नाम केशवचक्रवर्ती इति वा किमपि अस्ति। सः एकः एव किमपि अदत्त्वा एव इतः गतवान्" इति।

"सः तथा किमर्थं कृतवान् स्यात्?" इति पृष्टवान् सः धनिकः।

"तदेव अहम् अपि न जानामि। षष्टिवर्षीये मम अनुभवे तादृशः उदारः अन्यः कोऽपि मया न दृष्टः। यदा सः गमनप्रस्तावं कृतवान् तदा अहम् अभ्यासबलेन 'किमपि दातव्यम्' इति पृष्टवान् अपि। किन्तु अनिवार्यकारणेन पार्श्वग्रामं गत्वा त्रिचतुराणां दिनानाम् अनन्तरम् अहं यदा प्रत्यागतवान् तदा सः इतः निर्गतः आसीत्। मां अत्याशासहितं चिन्तितवान् स्यात् सः। यदि दातव्यम् इति इच्छा स्यात् तर्हि अत्रत्यस्य कस्यचित् हस्ते दत्त्वा मां दातुं सूचयितुम् अर्हेत् सः" इति उक्तवान् नटवरः।

धनिकः प्रीत्या आदरेण च नटवरस्य स्कन्धे हस्तं स्थापयन्- "नटवर! सः केशवचक्रवर्ती अहम् एव। बहवः धनिकाः भवते किमपि किमपि दत्तवन्तः। तेषु एकम् अपि भवान् न स्मरति। यः किमपि न दत्तवान् तादृशं मां सम्यक् स्मरति भवान्। सत्यं खलु?" इति पृष्टवान्।

नटवरः आश्चर्यचकितः सन् केशवचक्रवर्तिनं भक्त्या श्रद्धया च नमस्कृतवान्।

तदा केशवचक्रवर्ती –"यदा अहम् अत्र आसं तदा भवते अमूल्यं पारितोषिकं दातुं निश्चितवान् आसम्। अस्मिन् वार्धक्ये भवतः योगक्षेमं द्रष्टुं कोऽपि नास्ति खलु? अतः मया सह आगच्छतु। यावज्जीवं भवतः कोऽपि क्लेशः यथा न भवेत् तथा व्यवस्थां करिष्यामि। इदानीम् एव गच्छाव तावत्" इति उक्त्वा तं शकटसमीपं नीतवान्।

नटवरः आश्चर्यम् आनन्दं च अनुभवन् उत्साहेन केशवचक्रवर्तिनम् अनुसरन् शकटम् आरूढवान्।



# अनिवार्यता

श्रीरामपुरस्य शिवरामः श्रीनिवासस्य गृहं तदा तदा आगच्छति। सः कदलीफलानां विक्रयिकः। यदा सः श्रीनिवासस्य गृहम् आगच्छति तदा पञ्च कदलीफलानि दत्त्वा एकं रूप्यकं स्वीकृत्य गच्छति। श्रीरामस्य कदलीवाटिका श्रीनिवासस्य गृहतः द्वियोजनदूरे अस्ति।

एकदा कस्यापि शुभकार्यस्य निमित्तं अपेक्षितम् इत्यतः श्रीनिवासः शिवरामस्य वाटिकां गतवान्। समीचीनानि शतं कदलीफलानि स्वीकृतवान् च। तदर्थं विंशतिं रुप्यकाणि पृष्टवान् शिवरामः।

तदा श्रीनिवासः आश्चर्येण - "किं भोः शिवराम! योजनद्वयात् आगत्य भवान् मह्यं पञ्च कदीलफलानि दत्त्वा एकं रूप्यकं स्वीकरोति स्म। इदानीम् अहम् एव भवतः वाटिकाम् आगतवान् अस्मि। इदानीम् अपि तावदेव मूल्यं वदति खलु?" इति पृष्टवान्।

तदा शिवरामः हसन् - "भवतः गृहम् आगत्य अहं यत् विक्रीतवान् तत्र मम अनिवार्यता आसीत्। भवतः इदानीम् अनिवार्यता अस्तीति कारणतः भवान् अत्र आगतवान्। अतः मूल्ये न्यूनतायाः प्रश्नः एव नास्ति खलु?" इति उक्तवान्।

हसन् शिरः चालितवान् श्रीनिवासः।





# उत्तररामायणम्

परेद्युः सूर्योदयसमनन्तरम् एव लवणासुरः आहारसङ्ग्रहणार्थं गृहात् प्रस्थाय, मधुपुरस्य सीमाप्रदेशम् अतीत्य अरण्यं प्रविष्टवान्। तस्मिन् समये शत्रुघ्नः यमुनानदीं तीर्त्वा, मधुपुरस्य द्वारसमीपम् आगत्य, अरण्यतः प्रत्यागच्छन्तं लवणासुरं प्रतीक्षमाणः तत्रैव स्थितवान्।

मध्याह्नः जातः। तदा अरण्यतः प्रत्यागच्छन् लवणः दृष्टः। सः मृगयां समाप्य मृगयासमये प्राप्तं प्राणिसमूहम् आनयन् आसीत्। सः द्वारस्य समीपम् आगत्य, तत्र स्थितं धनुर्बाणसहितं शत्रुघ्नं दृष्ट्वा, विकटहासं कुर्वन् - "किं रे मानव? अद्य मम बहु स्वादिष्टं भोजनम्। अहो महत् मृगयाफलम्!" इति उक्तवान्।

तस्य अट्टहासवचनानि श्रुत्वा शत्रुघ्नः क्रोधतप्तः अभवत्। "किं रे क्रूरलवण! साधुजनकण्टकभूतं भवन्तं मारयितुम् इदानीं युद्धाय भवतः समीपम् आगतवान् अस्मि अहम्। इदानीं मत्कृते भवान् एव मृगयामृगः!" इति उच्चैः गर्जितवान् शत्रुघ्नः।

"कः भवान्? तद् वदतु" इति लवणः पृष्टवान्।

"अहं दशरथमहाराजस्य पुत्रः अस्मि। श्रीरामस्य अनुजः अहं शत्रुघ्नः। इदानीं मम हस्तेन एव भवतः मरणं भविष्यति। अद्य भवतः आयुषः अन्तिमदिनम्" इति उक्तवान् शत्रुघ्नः।

लवणः अट्टहासं कुर्वन् -"भवतः अग्रजः



मम मातुलं रावणं हतवान् इति भवतः गर्वः वा? किन्तु अहं न रावणसदृशः। अहं लवणासुरः। मया अनेके महावीराः हताः। अहं तु भवन्तं तृणाय मन्ये। मया सह युद्धं कर्तुम् इच्छति वा? अस्तु, भवतः आकाङ्क्षाशमनं करिष्यामि। तिष्ठतु किञ्चित्। अन्तः गत्वा आयुधम् आनयामि। युद्धार्थं समया–समयविचारः किञ्चित् करणीयः खलु? इदानीम् एव आगच्छामि" इति उक्तवान्।

"मम दृष्टिपथं प्रविष्टस्य भवतः इतः निर्गन्तुं कथम् अवकाशः लभ्यते भोः? भवतः बलस्य रहस्यं जानामि अहम्। मत्सदृशेन तृणेन सह योद्धुम् अपि भवान् शिवदत्तम् आयुधम् इच्छति वा? एतस्मिन् क्षणे एव भवान् म्रियते" इति उक्तवान् शत्रुघ्नः।

निरुपायः लवणः प्राणिनां शवान् अधः निक्षिप्य, हस्तौ आस्फालयन्, एकं महावृक्षं समूलम् उत्पाट्य शत्रुघ्नस्य उपरि क्षिप्तवान्। अनन्तरम् अपि यथा यथा सः एकैकशः वृक्षान् उत्पाट्य उत्पाट्य क्षिप्तवान्, तथा तथा शत्रुघ्नः स्वीयबाणैः तान् छित्वा छित्वा पातयति स्म। एतन्मध्ये शत्रुघ्नः स्वमस्तके कस्यचित् वृक्षस्य प्रहारं प्राप्य, भूमौ पतित्वा, अचेतनः अभवत्। तं दृष्ट्वा मन्दमतिः लवणः शत्रुघ्नः मृतः इति चिन्तयन् स्वीयं शूलम् आनेतुम् अन्तः न गतवान्। प्रत्युत मृगयां कृत्वा अनीतान् मृगशवान् उन्नीय अन्तः गन्तुम् उद्युक्तः अभवत्। "मम पुरतः एतस्य तृणसदृशस्य मानवस्य का गणना? एतं पृथक् पक्त्वा भक्षयिष्यामि" इति वदन् सः शत्रुघ्नम् अतिक्रम्य गन्तुं यावत् प्रवृत्तः तावत् शत्रुघ्नः मूर्छातः जागरणं प्राप्य, झटिति उत्प्लुत्य द्वारस्य समीपं गत्वा तत्र स्थितवान्।

उत्तरक्षणे एव शत्रुघ्नः रामेण दत्तं बाणं धनुषि सन्धाय, लवणासुरस्य उपरि तस्य प्रयोगं कृतवान्। सः बाणः अग्निज्वालां परितः प्रसारयन् गत्वा, लवणस्य वक्षःस्थलं विदारितवान्। लवणः उच्चैः गर्जनं कुर्वन् यदा मृतः, तदा शिवदत्तं तस्य त्रिशूलम् उपरि उत्प्लुत्य, कैलासे स्थितं शिवं प्रति अगच्छत्।

अनन्तरं शत्रुघ्नः स्वीयां सेनाम् आनाय्य, मधुपुरम् आक्रम्य, तस्य राजा भूत्वा, सिंहासनम् आरुह्य, स्वीयं राज्यपरिपालनम्

आरब्धवान्। शत्रुघ्नस्य धर्मयुक्तं राज्यपालनं दृष्ट्वा सर्वे अपि सन्तुष्टाः अभवन्।

पुनः द्वादशवर्षाणि व्यतीतानि। तदा शत्रुघ्नस्य रामदर्शनापेक्षा अभवत्। सः अनुचरैः सह स्वीयां सेनां गृहीत्वा अयोध्यां प्रति प्रयाणं कुर्वन् मार्गमध्ये वाल्मीकिमहर्षेः आश्रमे स्थित्वा एकां रात्रिं यापितवान्। तत्र सः एकं नूतनं सन्तोषम् अनुभूतवान्।

वाल्मीकिः अर्घ्यपाद्यादिकं प्रदाय, सादरम् अतिथिसत्कारं कृतवान्। तस्य सेनाकृते अपि भोजनोपचाराणां व्यवस्था कृता। अनन्तरं वाल्मीकिः स्वरचितां गीतरूपां रामकथां रागतालसमन्वितां श्रावितवान्। अतीतानां रामकथानां पुनः साक्षात्कारं प्राप्तवन्तः इव सर्वे अद्भुतम् अनिर्वचनीयं च आनन्दम् अनुभूतवन्तः।

प्रातःकालपर्यन्तं रामकथाश्रवणं प्राचलत्। परेद्युः शत्रुघ्नः वाल्मीकेः अनुज्ञां प्राप्य अयोध्यां प्रति प्रस्थितवान्। अयोध्यायां रामं दृष्ट्वा -"अग्रज, भवतः आज्ञाम् अनुसृत्य, भवता दत्तेन एकेनैव बाणेन लवणासुरं हत्वा तस्य राज्यं पालयन् अस्मि। द्वादशवर्षाणि यावत् भवतः दर्शनाभावात्, तथैव तत्र स्थातुम् असमर्थः भूत्वा आगतवान् अस्मि" इति उक्तवान्।

रामः महता वात्सल्येन शत्रुघ्नम् आलिङ्ग्य -"वत्स, राज्यस्य स्वीकारानन्तरं राज्यात् बहिः बहुदिनानि यावत् राज्ञा न स्थातव्यम्। अतः भवान् गत्वा राज्यपालनं सम्यक् करोतु। एवमेव पुनः यदा मां द्रष्टुम् इच्छति तदा आगच्छतु" इति उक्तवान्।





शीघ्रम् एव तं मधुपुरम् आदरपूर्वकं प्रेषितवान्।

भरतलक्ष्मणौ बहुदूरपर्यन्तं शत्रुघ्नेन सह गत्वा, तम् आपृच्छ्य प्रत्यागतवन्तौ।

एतदनन्तरं कदाचित् कश्चित् ग्रामीणः ब्राह्मणः पञ्चवर्षीयस्य स्वीयपुत्रस्य शवम् आनीय राजभवनस्य द्वारसमीपे स्थित्वा रोदितुम् आरब्धवान्। रोदनं कुर्वन् सः ब्राह्मणः -"मम एकः एव पुत्रः आसीत् सोऽपि अकालमरणं प्राप्तवान्। महाराजस्य राज्यपालनं धर्मयुक्तं भवति चेत् एतादृशम् अकालमरणं कथं वा भवेत्? इक्ष्वाकुवंशीयानां राज्ये कदापि एवं न अभवत्। वनवासकाले रामः राजधर्मान् विस्मृतवान्। तस्य एव फलम् इदम्" इति उच्चैः आक्रोशं कुर्वन् उक्तवान्।

तां वार्तां श्रुत्वा रामः अतीव चिन्तामग्नः अभवत्। सचिवान् वसिष्ठादिब्राह्मणान् च आनाय्य, ब्राह्मणबालकस्य तादृशमरणस्य कारणं किम् इति तान् पृष्टवान्। कारणं वक्तुं तेषु कोऽपि समर्थः न अभवत्। तदा नारदः तत्र समागत्य -"एकःअनधिकारी महत् तपः आचरन् अस्ति। एषः युगधर्मविरुद्धः आचारः। अतः एतेन अधर्माचरणेन एव बालकस्य अकालमरणं जातम्" इति उक्तवान्। परिशीलनेन तस्य वचनं यथार्थम् इति ज्ञातम्।

सद्यः एव रामः लक्ष्मणं -"भवान् झटिति गत्वा, तं ब्राह्मणं समाश्वास्य, बालकस्य शवं तैलभाण्डे सुरक्षितं स्थापयतु" इति उक्तवान्।

अनन्तरं रामः आयुधानि गृहीत्वा, पुष्पकम् आरुह्य, तिसृषु दिक्षु अपि अन्विष्य, दक्षिणदिशं प्रति प्रस्थितवान्। तदा एकस्मिन् सरोवरे ऊर्ध्वपादः अधोमस्तकः मनुष्यः श्वासनिरोधं कृत्वा तपः आचरन् दृष्टः।

रामः विमानतः अवतीर्य -"अहं दशरथमहाराजस्य पुत्रः रामः अस्मि। भवान् कः? किमर्थम् एतादृशं कठिनतपः आचरन् अस्ति? केन उपदिष्टः भवान् एतत् कार्यं कुर्वन् अस्ति?" इति पृष्टवान्।

तदा सः तापसः -"राजन्! मम नाम शम्बूकः इति। अहं केनापि न उपदिष्टः। स्वेच्छया एव अहं सशरीरः स्वर्गं गन्तुम् इच्छन् एवंरूपं तपः कुर्वन् अस्मि" इति



किमपि किमपि वदन् एव आसीत्। तदा रामः स्वीयखड्गेन शम्बूकस्य मस्तकच्छेदनं कृतवान्।

सद्यः एव रामस्य उपरि देवताभिः पुष्पवर्षणं कृतम्। देवदुन्दुभीनां ध्वनयः प्रतिध्वनिताः। "राम, एषः शम्बूकः भवता हतः। तेन भवान् स्वर्गं रक्षितवान्। एतदर्थं किमपि अपेक्षितं वरं पृच्छतु दद्मः" इति उक्तं देवताभिः।

"एवं तर्हि अकालमरणं प्राप्तवन्तं ब्राह्मणबालकम् उज्जीवयन्तु" इति वरं पृष्टवान् रामः।

"शम्बूकस्य हननसमनन्तरम् एव सः बालः पुनर्जीवनं प्राप्तवान्" इति उक्त्वा देवताः ततः निर्गताः।

रामः ततः समीपे एव स्थितं अगस्त्याश्रमं गत्वा, तेन मुनिना दत्तम् अतिथि–सत्कारादिकं स्वीकृतवान्। अगस्त्यः रामाय कल्पाभरणनामकं दिव्यम् एकम् आभरणम् उपायनरूपेण प्रदत्तवान्। रामः तत् स्वीकृत्य -"स्वामिन्, एतत् दिव्याभरणं भवते केन समर्पितम्?" इति पृष्टवान्।

तस्य प्रश्नस्य उत्तररूपेण अगस्त्यः श्वेतस्य कथां कथितवान्। ततः पूर्वम् एकत्र सहस्रयोजविस्तीर्णयुतम् एकम् अरण्यम् आसीत्। तस्य मध्यभागे एकयोजन–चतुरस्रपरिमितः कश्चन सरोवरः। तस्मिन् अरण्ये एकोऽपि खागो वा मृगो वा न आसीत्। सरोवरस्य समीपे एकः आश्रमः आसीत्।

कदाचित् अगस्त्यः तम् आश्रम गत्वां, एकां रात्रिं तत्रैव नीत्वा, प्रातः उत्थाय सरोवरस्य समीपं गतवान्। सरोवरस्य तीरे सुपुष्टः एकः शवः दृष्टः। सुस्थितियुक्तः सः शवः निद्रामग्नः इव दृश्यते स्म। एषः कीदृशः विचित्रः शवः इति अगस्त्यः आलोचयन् तत्र स्थितः आसीत्। तदा एकं विमानम् आकाशतः भूमिम् आगतम्। तस्मिन् दिव्यविमाने एकः दिव्यपुरुषः, तं सेवमानाः अनेकाः अप्सरसः च अपि आसन्। तासु काश्चन गायन्ति स्म, काश्चन वाद्यादिकं वादयन्ति स्म। अन्याः काश्चन नृत्यन्ति स्म।

किञ्चित्कालानन्तरं सः दिव्यपुरुषः विमानतः अवतीर्य, सरोवरस्य समीपं गत्वा, तीरे स्थितं शवं भक्षयित्वा, सरोवरे पाणिपादं



प्रक्षाल्य पुनः विमानम् आरोढुं यदा प्रस्थितः, तदा तत्सर्वं पश्यन् अगस्त्यः तस्य समीपं गत्वा -"आर्य, कः भवान्? एतादृशस्य असह्यभोजनस्य कारणं किम्? अत्यन्तनीचाः अपि एतादृशकार्यं न कुर्वन्ति किल? अवश्यम् अत्र किमपि रहस्यं स्यात् इति मत्वा पृच्छन् अस्मि। वदति वा?" इति पृष्टवान्।

सः दिव्यपुरुषः स्वीयं पूर्ववृत्तान्तम् अगस्त्यं कथितवान्।

अहं विदर्भराजस्य सुदेवस्य पुत्रः श्वेतः। सुदेवस्य द्वे पत्न्यौ। द्वे अपि एकैकं पुत्रं प्राप्तवत्यौ। तयोः ज्येष्ठः अहं श्वेतः। द्वितीयः सुरथः। जनकस्य मरणानन्तरं अहं बहुकालपर्यन्तं राज्यपालनं कृत्वा, अन्ते सुरथं पट्टाभिषिक्तं कृत्वा च, स्वयं तपश्चरणार्थं वनं गतवान्। तत्र दीर्घकालं यावत् तपः तप्त्वा, शरीरं परित्यज्य ब्रह्मलोकं गतवान्। किन्तु ब्रह्मलोके अपि अहं बुभुक्षापिपासादिभिः मुक्तः न अभवम्। तेन अतीवभीतः अहं ब्रह्मणः समीपं गत्वा "एतस्मिन् ब्रह्म-लोके अपि बुभुक्षापिपासादयः मां किमर्थं बाधन्ते? कः अपराधः मया कृतः?" इति पृष्टवान्।

तदा ब्रह्मा -"यस्मिन् अरण्ये भवान् तपः आचरितवान्, तत्र, खगमृगादयः न आसन्। अतः भवतः भोजनतृप्तिः न अभवत्। किञ्च भवान् सर्वदा तपोमग्नः भूत्वा अतिथिजनानां सत्कारं न कृतवान्। तेभ्यः भोजनं न दत्तवान्। तेनैव कारणेन बुभुक्षापिपासादयः भवन्तम् एवंरीत्या बाधन्ते। भवान् किञ्चित्कालपर्यन्तं पूर्वं अरण्ये परित्यक्तं स्वीयं शरीरम् एव भक्षयित्वा बुभुक्षाशमनं प्राप्नुवन् कालं यापयतु। तेषु दिनेषु भवतः शरीरं पुष्टम् अक्षयं च स्थास्यति। अनन्तरम् एकदा अगस्त्यः तत्र आगत्य स्वीयेन अपरिमितमाहात्म्येन भवतः बुभुक्षा–पिपासादिकं परिहरिष्यति" इति उक्तवान्।

सः दिव्यपुरुषः तत्र स्थितः मुनिः अगस्त्यः एव इति ज्ञात्वा, सपदि एव -"स्वामिन्, मद्विषये दयालुः भूत्वा, एतस्मात् कष्टात् कृपया मां रक्षतु। प्रतिफलरूपेण एतत् दिव्यं कल्पाभरणं स्वीकरोतु। एतत् आभरणं प्रतिदिनं सुवर्णं, धनं, वस्त्राणि, आहारं च यथेच्छं प्रयच्छति" इति उक्तवान्।

तेन दत्तम् आभरणं यदा अगस्त्यः स्वीकृतवान्, तदा शवः शिथिलः भूत्वा भूमौ विलीनः अभवत्। दिव्यपुरुषः श्वेतः, सन्तोषेण स्वर्गं प्रति प्रस्थितवान्।

तां कथां श्रुत्वा रामः अगस्त्यं -"स्वामिन्' यत्र श्वेतः तपः आचरितवान्, तस्मिन् वने खगमृगादयः किमर्थं न आसन्?" इति पृष्टवान्। अगस्त्यः पुनः एकं वृत्तान्तं कथितवान्।

कृतयुगे मनुचक्रवर्ती स्वपुत्रम् इक्ष्वाकुं पट्टाभिषिक्तं कृत्वा, राजनीतिं सम्यक् उपदिश्य स्वयं ब्रह्मलोकं गतवान्। इक्ष्वाकोः शतं पुत्राः सञ्जाताः। तेषु पुत्रेषु अन्तिमः चण्डः। सः मन्दबुद्धिः आसीत्। इक्ष्वाकुः विन्ध्यशैवलयोः मध्यभागे स्थितं प्रदेशं तस्मै चण्डाय प्रदत्तवान्। चण्डः तत्र मधुमन्नामकं सुन्दरं नगरम् एकं निर्माप्य शुक्राचार्यं गुरुरूपेण स्वीकृत्य, तत् नगरं पालयति स्म।

शुक्राचार्यस्य **अरजा** नाम सुन्दरी पुत्री आसीत्। एकदा चण्डः वने अटन् एकाकिनीम् अरजां दृष्ट्वा तस्याम् अनुरक्तः अभवत्। अरजा तु "अहं शुक्राचार्यस्य पुत्री अस्मि। भवान् दुष्टचेष्टापरः भवति चेत्, शुक्राचार्यः क्रोधेन क्रूरं शपति" इति हितवाक्यं कथितवती। तथापि चण्डः तस्याः हितवचनम् अशृण्वन् बलात् ताम् अवमानितवान्।

यदा चण्डः मधुमन्नगरं प्रतिनिवृत्तवान्, तदा तस्य दुष्टप्रवृत्तिं शुक्राचार्यः ज्ञातवान्। तदा शुक्राचार्यः "मधुमन्नगरं परितः शतयोजनपरिमितप्रदेशेषु सप्त दिनानि यावत् धूलिवर्षणं भवतु। तेन सः प्रदेशः सम्पूर्णरूपेण नश्यतु" इति शापं दत्तवान्।

तस्य शापस्य वार्ताश्रवणसमनन्तरम् एव तस्मिन् प्रदेशे स्थिताः सर्वे अपि ततः निर्गत्य इतस्ततः धावितवन्तः।

गुरोः शापप्रभावेण एकसप्ताहं यावत् निरन्तरं धूलिवर्षणम् अभवत्। समस्तं विनष्टम्।

एताः कथाः श्रुत्वा रामः **अगस्त्याश्रमे** कञ्चित् कालं यापयित्वा, महामनेः तस्य अनुज्ञां प्राप्य अयोध्यां प्रत्यागतवान्।





# युक्तिशक्तिः

प्राचीनकाले काश्मीरदेशम् अवन्तिवर्मा पालयति स्म। तस्मिन् समये प्रकृतेः विकोपः अधिकः आसीत्। प्रतिवर्षं क्षामः भवति स्म। आहाराभावतः जनाः महान्तं क्लेशम् अनुभवन्ति स्म।

काश्मीरदेशः उन्नतस्य पर्वतस्य मूले अस्ति। तत्रत्याः नद्यः महता वेगेन प्रवहन्ति। प्रवाहपीडा तत्र तदा तदा भवति एव। किन्तु तत्प्रदेशस्य भूमिः अत्युत्कृष्टा।

महापद्मसरोवरस्य जलस्य कारणतः काश्मीरराज्ये सस्यवृद्धिः अतिसमीचीना भवति। किन्तु जनाः फलसमृद्धिं न पश्यन्ति। यतः फलसमये एव वितस्तानद्याः प्रवाहः महापद्मसरोवरे प्रविशति। तदा उद्गतेन सरोवरप्रवाहेण सर्वं नाशितं भवति।

अवन्तिवर्मा धर्मभीरुः। सः चिन्तयति यत् अस्मत्परतः कोऽपि प्रमादः घटितः। तत्कारणतः एव सर्वदा क्षामः इति। अतः सः अनेकेषां देवानां पूजां कारयति। ग्रहशान्त्यर्थं होमयज्ञादीन् कारयति। किन्तु क्षामनिवारणं न जातम् एव।

कानिचन वर्षाणि एवम् एव अतीतानि। एकदा राजा श्रुतवान् यत् समीरनामकः कश्चन पुरुषः 'अहं प्रवाहपीडां निवारयितुं शक्नोमि' इति वदन् अटति इति। जनाः तं मतिभ्रान्तं भावयन्तः उपहसन्ति इत्यपि महाराजेन श्रुतम्। एतद्विषये कुतूहलः प्रवृद्धः महाराजस्य मनसि।

येन केनापि उपायेन क्षामपरिस्थितिः निवारणीया एव इति अवन्तिवर्मणः सङ्कल्पः। अतः सः समीरस्य कथनं पुरस्कुर्वन् तं राजधानीम् आनायितवान्।

राजाज्ञानुगुणम् आगतः समीरः महाराजं प्रणम्य विनयेन स्थितवान्।

"प्रवाहपीडां निरोद्धुं शक्नेमि इति वदन् भवान् सर्वत्र अटति इति वचनं सत्यं

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



वा?''इति पृष्टवान् राजा।

''आं महाराज! प्रवाहपीडा अपगता चेत् क्षामः अपि अपगमिष्यति'' इति आत्मविश्वासेन उक्तवान् समीरः।

''तत् तु सत्यम्। प्रवाहपीडायाः निरोधः कथम्? भवान् वस्तुतः अपि एतत् साधयितुं शक्नुयात् वा?'' इति पृष्टवान् राजा अवन्तिवर्मा।

''आं महाराज!। अहं प्रवाहपीडां निरोद्धुं शक्नोमि'' इति उक्तवान् समीरः।

''यत् कार्यं राजशक्त्या अपि न शक्तं तत् भवान् एकाकी कथं साधयिष्यति?'' इति पुनः पृष्टवान् राजा।

''भवान् धनं ददाति चेत् साधयिष्यामि एव। धनेन साधयितुम् अशक्यं किम् अस्ति महाराज?'' इति प्रतिपृष्टवान् समीरः।

''धनागारतः यावदिच्छति तावत् नयतु। किन्तु स्मर्तव्यं यत् आगामिनि वर्षे प्रवाहपीडा न भवेत् ''इति जागरूकतावचनम् उक्तवान् महाराजः।

मन्त्री महाराजस्य एताम् उदारतां निरोद्धुं प्रयत्नं कृतवान्। किन्तु महाराजः सङ्कल्पच्युतः न जातः।

समीरः आत्मना यावत् नेतुं शक्येत तावन्ति सुवर्णनाणकानि स्वीकृत्य प्रस्थितवान्। जनाः अपि उपहसन्तः तम् अनुसृतवन्तः।

केचन वदन्ति स्म ''समीरः महाराजं सम्यक् वञ्चितवान्'' इति।

अन्ये केचन वदन्ति स्म - ''समीरः इव महाराजः अपि मतिभ्रान्तः'' इति।

सर्वेषां तु मनसि 'समीरः अग्रे किं कुर्यात्' इति कुतूहलम् आसीत्।

वितस्तानद्याः प्रवाहः काश्मीरे प्रवाहपीडां जनयति स्म किल? सा नदी प्रवाहेण सह पर्वतशिखरभागतः महाशिलाः आनयति। पर्वतमूले त्यक्त्वा अग्रे गच्छति च। एवं प्रतिवर्षम् आगताभिः शिलाभिः कश्चन सेतुः निर्मितः आसीत्।

एतत्कारणतः वितस्तायाः प्रवाहः प्रतिवर्षं महापद्मसरोवरं प्रविशति, ततः च प्रवाहपीडा सम्भवति स्म च। जनाः एतं सेतुम् अतिक्रम्य सदा गमनागमनं कुर्वन्तः आसन्। एवं प्रवाहपीडायाः मूलं कारणं ज्ञातवान् आसीत्

समीरः।

समीरः धनस्यूतं स्वीकृत्य पूर्वोक्तसेतोः समीपम् आगतवान्। ताः शिलाः आरुह्य तासां मध्ये सुवर्णनाणकानि पातयन् सः अग्रे गतवान्।

जनाः तम् अनुसरन्तः आगतवन्तः खलु? ते समीरस्य एतम् उद्यमं दृष्ट्वा उच्चैः हसितवन्तः।

"एषः निश्चयेन मतिभ्रान्तः एव। अमूल्यानि नाणकानि नद्यां क्षिपति किल" इति ते परस्परम् उक्तवन्तः। तम् एतस्मात् उद्यमात् निवारयितुं कोऽपि न शक्तवान्।

अकस्मात् जनसमूहे किञ्चन जागरणम् उत्पन्नम्। केचन नद्याम् अवतीर्य सुवर्णनाणकानाम् अन्वेषणे उद्युक्ताः अभवन्। तत्रैव जनानां गणाः सञ्जाताः। गणशक्त्या ते महतीम् अपि शिलां तीरं प्रति आनीतवन्तः। शिलायाः अधः स्थितानि नाणकानि स्वीकृतवन्तः।

अल्पेन एव कालेन एषा वार्ता समीपस्थेषु ग्रामेषु प्रसृता। पुनः अपि सहस्रशः जनाः तत्र आगतवन्तः। शतशः वर्षेभ्यः पतिताः शिलाः तीरं प्रापितवन्तः।

राजसेवकैः सर्वथा कर्तुम् अशक्यं कार्यं जनता कृतवती आसीत्। समीरः शिष्टानां शिलानाम् अपसारणार्थम् अन्यम् उपायम् अवलम्बितवान्। राजधानीं गत्वा पुनः अपि सुवर्णनाणकानि आनीय शिष्टानां शिलानाम् अधः पातितवान्।

एकदिनाभ्यन्तरे सा सेतुमयी शिलापङ्क्तिः अदृश्यतां गता। बाधाभावात् इदानीं जलं सहजगत्या प्रवहति। ये जनाः श्रमम् आचरितवन्तः आसन् ते प्रतिफलरूपेण सुवर्णनाणकानि प्राप्तवन्तः आसन्।

तस्मिन् वर्षे वितस्तानद्याः प्रवाहः महापद्मसरोवरं न प्राविशत्। प्रवाहपीडाभावतः सन्तुष्टाः जनाः समाधानेन निःश्वसितवन्तः।

समीरः स्वकीयया युक्तिशक्त्या अपूर्वं कार्यं साधितवान् आसीत्। सर्वे देशहितार्थं तेन कृतस्य कार्यस्य प्रशंसां कृतवन्तः। महाराजः अवन्तिवर्मा अमूल्येन पारितोषिकेण तं सम्मानितवान्।



# अभिशापः

उज्जयिन्याः राजा कीर्तिवर्मा। तस्य आस्थाने जयदेवः नाम मेधावी शास्त्रज्ञः च कविः आसीत्। देशविदेशेषु तस्य महती कीर्तिः आसीत्। जयदेवस्य पुत्रः सोमनाथः अपि कविः पण्डितः च, कानिचन काव्यानि लिखितवान् आसीत् च। किन्तु तेन यशः न प्राप्तम्।

एकदा सोमनाथः कीर्तिवर्माणं दृष्ट्वा नमस्कृत्य निवेदितवान् -"अहं पार्श्वस्थे मालवदेशे स्थातुम् इच्छामि। अनुमतिदानेन माम् अनुगृह्णातु" इति।

तदा कीर्तिवर्मा आश्चर्येण पृष्टवान् -" किं भवतः पिता भवतः विषये कुपितः?" इति।

"नैव मधुरः सम्बन्धः आवयोः" इति उक्तवान् सोमनाथः।

"एवं तर्हि मम राज्ये भवतः सुखसौकर्यादिकं नास्ति वा?" इति पुनः पृष्टवान् कीर्तिवर्मा।

"महाराज! अन्यराज्ये अत्र अविद्यमानं किम् अधिकं सौकर्यं प्राप्नुयाम्?" इति उक्तवान् सोमनाथः।

"तर्हि किमर्थं भवान् पार्श्वराज्ये निवासं कर्तुम् इच्छति?" इति पृष्टवान् राजा।

सोमनाथः किमपि वक्तुम् अनिच्छन् मौनं स्थितवान्। तदा तत्र स्थितः मन्त्री प्रद्योतसेनः सोमनाथस्य अन्तरङ्गं जानन् महाराजम् उक्तवान् -"महाराज! सोमनाथाय गमनार्थम् अनुमतिं ददातु" इति।

सोमनाथः अनुमतिं प्राप्य ततः निर्गतवान्। अनन्तरं राजा कीर्तिवर्मा प्रद्योतसेनं पृष्टवान् "मन्त्रिवर्य! सोमनाथाय गमनानुमतिं दातुं किमर्थं भवान् सूचितवान्?" इति।

"महाराज! वटवृक्षस्य अधः किमपि न प्रवर्धते इति आभाणकं भवान् श्रुतवान् खलु? सोमनाथः असाधारणप्रतिभाशालिनः जयदेवस्य पुत्रः जातः इति तु अभिशापः एव। सः अत्र कदापि स्वप्रतिभया प्रसिद्धिं प्राप्तुं न अर्हति" इति उक्तवान् मन्त्री।

मालवदेशं गतः सोमनाथः अनेकानि काव्यानि रचितवान्। उत्तमां कीर्तिं सम्पादितवान् च।





# प्रत्युपकारः

## ६

सुधाकरः केनापि उपायेन समापनीयः एव इति चिन्तयन्तौ जयविजयौ योजनां कृतवन्तौ। सुधाकरस्य भोजनं ग्रामप्रमुखयोः गृहे एव सज्जीभवति। सुधाकरं पीडयितुम् इच्छन्तौ जयविजयौ तस्मिन् भोजने मरीचिकाचूर्णं यथेष्टं योजितवन्तौ। किन्तु तत् भोजनं सुधाकरः विनायासं खादितवान्। एतत्परिणामतः जयविजययोः भोजनं कटुमयं जातम्। तौ उदरपीडया पीडितौ जातौ च।

एतस्याः घटनायाः अनन्तरम् अपि जयविजयौ विवेकिनौ न जातौ। केषाञ्चित् दिनानाम् अनन्तरं तौ दुष्टौ सुधाकरस्य भोजने विषं योजितवन्तौ। एतस्य स्वीकारेण सुधाकरस्य कापि हानिः न जाता। किन्तु जयविजयौ यदा भोजनार्थम् उपविष्टवन्तौ तदा निरन्तरं वमनं जातम्। तौ मूर्च्छां गतवन्तौ।

'केन कारणेन एवं जातम्' इति अजानन्तौ ग्रामज्येष्ठौ भीत्या सुधाकरस्य समीपं गतवन्तौ।

सुधाकरः प्रवृत्तं सर्वं श्रुत्वा उक्तवान् -"प्रायः जयविजयौ मम भोजने विषं योजितवन्तौ स्याताम्। एतादृशैः कार्यैः मम उपरि कोऽपि परिणामः न भवति। विपरीततया तौ एव कष्टे पतितौ। इदानीं कथञ्चित् एतौ रक्षयामि। किन्तु इतः परं कदाचित् एवं भवेत् तर्हि अहम् अपि किमपि कर्तुं न शक्नोमि" इति।

अनन्तरं सः ग्रामज्येष्ठयोः गृहं गतवान्। गृहस्य पृष्ठतः स्थितानि कानिचन पर्णानि आनीतवान्। तानि मर्दयित्वा रसम् उत्पाद्य तं रसं जयविजययोः मुखे स्थापितवान्।



अनन्तरं सः -"भवतोः सन्मार्गे आनयनं मम कर्तव्यम्। भवतोः इष्टं सद्यः एव सिध्यति" इति उक्त्वा विजयस्य स्कन्धे हस्तं संस्थाप्य पुनः अपि उक्तवान् -"भोः, भवान् जयम् अत्रैव त्यक्त्वा कैश्चित् ग्रामीणैः सह अरण्यं गच्छतु। कञ्चित् एकं वृक्षंनिश्चित्य तं परितः चतुर्वारं परिक्रमणं करोतु। अनन्तरं नेत्रे निमील्य महाविष्णोः ध्यानं क्षणकालं करोतु। तदा काचित् देवी भवतां पुरतः प्रत्यक्षा भविष्यति। तां वदन्तु यत् जयः अस्मान् प्रेषितवान् इति। तदानीं सा भवद्भिः सह ग्रामम् आगमिष्यति। सा एव भवतोः स्वभावपरिवर्तनं कर्तुं शक्नुयात्" इति।

अनन्तरदिने विजयः कैश्चित् ग्रामवासिभिः सह अरण्यं गतवान्। एकं वृक्षं निश्चित्य तस्य परिक्रमणं कृतवान्। नेत्रे निमील्य महाविष्णोः जपं कर्तुम् आरब्धवान्

क्षणकालानन्तरं तत्र गम्भीरः कश्चन ध्वनिः उत्पन्नः। ग्रामवासिनः उच्चैः उद्घोषितवन्तः -"देवी उद्भूता! देवी प्रत्यक्षा जाता!" इति।

विजयः नेत्रे उन्मील्य आश्चर्यमिश्रित- स्वरेण ग्रामीणान् पृष्टवान् -"किं जातम्?" इति।

ग्रामवासिनः वृक्षमूले पतितां मूर्च्छां गतां प्रियंवदां प्रदर्श्य उक्तवन्तः -"एषा कुतः आगतवती इति वयं तु न जानीमः। सुधाकरेण सूचिता देवी एषा एव। एताम् अस्माकं ग्रामं नयेम वयम्। एतस्याः आगमनेन अस्माकं

एतस्य औषधरसस्य पानेन उभौ अपि उत्थाय उपविष्टवन्तौ। ग्रामज्येष्ठौ प्रवृत्तं सर्वं जयविजयौ निवेद्य जागरूकतावचनानि उक्तवन्तौ - 'भवन्तौ सुधाकरस्य अहितं किमपि चिन्तयतः चेत् भवन्तौ एव अपायं सम्मुखीकुरुतः। इतः परं वा भवतोः स्वभावे परिवर्तनं भवतु। सुधाकरस्य अहितं मनसा अपि न चिन्तनीयम्" इति।

जयविजयौ सुधाकरस्य पादयोः पतित्वा उक्तवन्तौ -"भवान् वस्तुतः अपि महामान्त्रिकः एव। आवाभ्यां महान् अपराधः कृतः। आवयोः चिन्तने एव दोषः अस्ति। बुद्धिः विपर्यस्ता अस्ति। सन्मार्गे गमनार्थं भवान् एव कमपि मार्गं प्रदर्शयतु" इति।

सुधाकरः क्षणकालं चिन्तायाम् आसीत्।

ग्रामस्य उद्धारः भविष्यति" इति।

विजयः प्रियंवदायाः मूर्च्छावस्थां ज्ञातवान्। अतः जलम् आनेतुं ग्रामीणान् प्रेषितवान्। यदा जलम् आगतं तदा तेन तस्याः मुखं सिक्तवान्।

प्रियंवदा नेत्रे उद्घाट्य पृष्टवती - "अहं कुत्र अस्मि?" इति।

तदा विजयः उक्तवान् -"अहं समीपस्थस्य शतानन्दवनग्रामस्य निवासी। मम नाम विजयः इति। जयः मां प्रेषितवान्। अस्माकं ग्रामम् आगच्छतु भवती। भवत्याः निमित्तं तत्र सर्वा व्यवस्था भविष्यति" इति।

'जयः' इति नामश्रवणेन सा अन्तःपुरोद्यान-रक्षकस्य जयस्य स्मरणं प्राप्तवती। सः एव एषः इति भावयन्ती सा अङ्गीकारपूर्वकं शिरः चालयन्ती मन्दस्वरेण -"मम इदानीं महती बुभुक्षा" इति उक्तवती।

"भवती यत् इच्छति तस्य व्यवस्थां कुर्मः वयम्। प्रथमं ग्रामं गच्छाम" इति उक्तवान् विजयः।

ग्रामवासिनः प्रियंवदां देवीं भावितवन्तः आसन्। ते धावन्तः गत्वा तस्याः निमित्तम् फलादिकं शिबिकां च आनीतवन्तः। फलस्वीकरणेन उत्साहं प्राप्य प्रियंवदा शिबिकायाम् उपविष्टवती।

प्रियंवदया सह सर्वे शतानन्दवनग्रामं गतवन्तः। तां सुधाकरस्य कुटीरस्य समीपं नीतवन्तः च। प्रियंवदा शिबिकातः अवतीर्य सुधाकरस्य कुटीरं प्रविष्टवती।



'सुधाकरः यथा सूचितवान् तथैव देवी प्रत्यक्षा जाता' इति वार्ता समग्रे ग्रामे प्रसृता। देव्याः दर्शनार्थं जनाः अहमहमिकया आगतवन्तः। प्रियंवदायाः अनुपमं सौन्दर्यं दृष्ट्वा ते आश्चर्येण मूकाः अभवन्। सर्वे चिन्तितवन्तः यत् सुधाकरः न केवलं रोगादीनां निवारकः, अपि तु सः देवतादीन् अपि स्वमायया प्रवर्तयति इति।

ग्रामवासिनां निर्गमनानन्तरं सुधाकरः प्रियंवदां पृष्टवान् -"भवती का? कथम् अकस्मात् प्रत्यक्षा अभवत्?" इति।

तदा प्रियंवदा उक्तवती -"भोः महानुभाव! भवान् तरुणः। किन्तु भवतः मुखे तत्त्वज्ञानिनां कला स्फुटं दृश्यते। अलौकिकं तेजः प्रकाशते। साधारणे अस्मिन् ग्रामे भवादृशस्य उपस्थितिः कथम् इति अहं तु न



जानामि। अस्तु तावत्, यत् अस्ति तत् विस्तरेण वदामि'' इति।

प्रियंवदया उक्तं वृत्तान्तं श्रुत्वा सुधाकरः उक्तवान् -''एतत् तु विचित्रम् एव। एकस्य जयस्य अन्वेषणार्थं प्रस्थिता भवती अपरस्य जयस्य ग्रामं प्राप्तवती। अहं तु न जानामि यत् केन बलेन प्रभावितः अहं तत् नाम उच्चरितवान् इति। अस्तु, इदानीं किं करणीयम् इति भवती चिन्तयति?'' इति।

सुधाकरस्य वचनश्रवणेन प्रियंवदायाः मुखे अरुणच्छाया प्रसृता। सा प्रसन्नस्वरेण उक्तवती -''भवतः दर्शनं कृतवत्याः मम हर्षस्य सीमा एव नास्ति। भवतः चित्रं विना मम हृदये अन्यत् किमपि नास्ति इदानीम्। अहं भवतः सहवासे सदा स्थातुम् अर्हामि वा?'' इति।

प्रियंवदायाः वचनस्य श्रवणेन सुधाकरः भीतः। तथापि सः जागरूकतया उक्तवान् -''प्रियंवदे! सद्यःकालीनं मम कर्तव्यं तु जयविजययोः सन्मार्गे आनयनम्। अतः भवती एतस्यां दिशि प्रयत्नं करोतु'' इति।

''भवान् यथा वदति तथा आचरामि'' इति उक्तवती प्रियंवदा।

एतदनन्तरं प्रियंवदा शयनं कृतवती। गाढनिद्रायां लीना अभवत् च।

जयविजयौ तु प्रियंवदायाः सौन्दर्येण आकृष्टौ। तद्दिनतः तौ तस्याः पार्श्वे एव स्थितवन्तौ। अन्यत् सर्वं विस्मृतवन्तौ।

एकदा जयः प्रियंवदाम् उक्तवान् -''भवती अनुपमसुन्दरी। यदि भवती मया सहैव सदा तिष्ठेत् तर्हि कियत् समीचीनं भवेत्!'' इति।

''तत् कथं सम्भवति? केषाञ्चित् दिनानाम् अनन्तरं मम विवाहः भविष्यति एव खलु?'' इति उक्तवती प्रियंवदा।

''विवाहः जातः चेत् किं सहवासः न भवेत्?'' इति मुग्धस्वरेण पृष्टवान् जयः।

''विवाहानन्तरम् अहं मम पतिगृहं गमिष्यामि खलु? अत्र कथं स्थातुं शक्येत?'' इति पृष्टवती प्रियंवदा।

किञ्चित् विचार्य उक्तवान् जयः -''एवं तर्हि भवती माम् एव परिणयतु'' इति।

''एतत् विजयः कथं वा अङ्गीकुर्यात् भोः?'' इति प्रतिप्रश्नं पृष्टती प्रियंवदा।

तत्रैव स्थितः विजयः असमाधानेन

उक्तवान् -''अह सर्वथा न अङ्गीकरोमि। एषा माम् एव परिणयेत्'' इति।

जयः विजयं क्रोधेन दृष्टवान्। तयोः मध्ये एतद्विषये विवादः एव उत्पन्नः।

प्रियंवदा तयोः कलहं निवारयन्ती उक्तवती -''अहं भवतोः अन्यतरम् एकं केवलं परिणेतुं शक्नोमि खलु? मां प्राप्तुम् एकः उपायः अस्ति। सः सुधाकरः महाबुद्धिमान्। यः तं सुधाकरं पराजयते तमेव अहं परिणेष्यामि'' इति।

''सः सुधाकरः महामान्त्रिकः। तं पराजेतुम् आवां सर्वथा न शक्नुवः। अतः आवाभ्यां कर्तुं योग्यं कमपि पणं सूचयतु भवती'' इति एकस्वरेण उक्तवन्तौ जयविजयौ।

''अहं परिणेतव्या इति इच्छा भवतोः मनसि बलवत्तरा यदि स्यात् तर्हि एतस्य साधनं कष्टकरं न। यदि प्रयत्नः कृतः स्यात् तर्हि असाध्यं किम्? शक्तिं सम्पाद्य यः तं पराजयते तस्य कण्ठे वरमालां स्थापयामि अहम्। मम निमित्तम् एतावत् अपि कर्तुं न शक्येत वा?'' इति पृष्टवती प्रियंवदा।

तदा प्रियंवदां संशयदृष्ट्या पश्यन् जयः पृष्टवान् -''सुधाकरस्य पराजयम् एव भवती किमर्थम् इच्छति? भवत्याः विवाहनिमित्तम् एतत् अनिवार्यं वा?'' इति।

''आम्। यदा कदापि सुधाकरतः अपायः भवेत् एव खलु? अहं भवतोः अन्यतरं परिणीतवती इत्येव चिन्तयेम, तदा सुधाकरः स्वमायया माम् उन्नीय नेतुं शक्नुयात् खलु? तदा भवन्तौ किं करिष्यतः? अतः अनन्तरकाले अपायः यदि न इष्यते तर्हि इदानीम् एव सुधाकरः पराजेतव्यः'' इति विवरणं दत्तवती प्रियंवदा।

''भवत्याः वचनं युक्तम् एव। श्वः एव आवां तं सुधाकरं पराजेतुं प्रयत्नं करिष्यावः। विजयः आवयोः एव भविष्यति'' इति एकस्वरेण आत्मविश्वासपूर्वकम् उक्तवन्तौ जयविजयौ।

(अनुवर्तते)





# शिरसः योगक्षेमम्

बुन्देलखण्डनगरे प्राचीनराजवंशीयः कश्चन धनिकः आसीत्। तस्य नाम जयपालः। जयपालसमीपे दैनन्दिन–जीवनयापनार्थं यावत् आवश्यकं तावत् अपि धनं न आसीत्। तथापि सः धनिकः इव वेषभूषादिकं धरन् आडम्बरं प्रदर्शयति। सदा स्ववंशविषये किमपि वदन् समयं यापयति।

एकदा जयपालः पीताम्बरश्रेष्ठिना सह वार्तालापं कुर्वन् आसीत्। तदा दूरतः आगच्छन् कश्चन वृषभशकटः ताभ्यां दृष्टः। तस्मिन् शकटे बहवः धान्यस्यूताः स्थापिताः आसन्।

तं शकटं दृष्ट्वा जयपालः उच्चैः उक्तवान् "कियदुन्नतः गजः! मम पितामहस्य समीपे अपि एतादृशः एव गजः आसीत्" इति।

तदा पीताम्बरः हसन् उक्तवान् -"भोः श्रीमन्, भवान् भ्रान्तः इति भाति। सः न गजः, अपि तु धान्यगोणीभिः पूर्णः वृषभशकटः" इति।

"भ्रमः मम न, अपि तु भवतः एव। सः गजः इति स्पष्टं दृश्यते। सः गजः अस्मदभिमुखं वेगेन आगच्छन् अस्ति" इति जयपालः उक्तवान्।

"श्रीमन्! सः धान्यगोणीभिः पूर्णः वृषभशकटः एव" इति दृढस्वरेण उक्तवान् पीताम्बरः।

"यदि सः गजः स्यात् तर्हि मम जयः। तदा अहं भवतः शिरः कर्तयिष्यामि। यदि सः शकटः स्यात् तर्हि भवतः जयः। तदा भवता मम शिरः कर्तनीयम्। भवतु वा?" इति वदन् जयपालः पीताम्बरस्य प्रतिक्रियाम् अनिरीक्षमाणः मार्गे आगत्य स्थितवान्। अल्पे एव काले वृषभशकटः तयोः पुरतः आगतः।

"जयपालवर्य! इदानीं वा ज्ञातं खलु एषः न गजः, अपि तु वृषभशकटः इति? भवान्

"बुन्देलखण्डस्य जानपदकथा"

पराजितः अभवत्" इति मन्दहासपूर्वकम् उक्तवान् पीताम्बरः।

"आं, पीताम्बर! भवतः वचनं सत्यम्। इदानीं मम शिरः कर्तयतु भवान्" इति उक्तवान् जयपालः।

"त्यजतु भोः एतं विषयम्। विनोदार्थं निश्चितः आसीत् सः पणः" इति उक्तवान् पीताम्बरः।

जयपालः हठस्वरेण उक्तवान् -"तथा कदापि भवितुं न अर्हति। वयं राजवंशीयाः। राजवंशीयाः वचनपरिपालने निष्ठुराः। भवता मम शिरः कर्तनीयम् एव" इति।

पीताम्बरः यावत् वदति चेदपि जयपालः न अङ्गीकरोति। अन्ते पीताम्बरः उक्तवान् -"निर्णयार्थम् आवां न्यायाधीशस्य समीपम् एव गच्छेव। सः यथा वदति तथा आचरणं भवतु" इति।

अनन्तरं तौ न्ययाधीशस्य समीपं गतवन्तौ। न्यायाधीशः समग्रं वृत्तान्तं श्रुतवान्। स्वकीयं निर्णयं श्रावितवान् च -"जयपालस्य शिरः पीताम्बरस्य अधीनम्" इति तु सत्यम् एव। यदि इच्छति तर्हि सः कर्तयतु, नो चेत् रक्षतु" इति।

एतं निर्णयं श्रुतवतः जयपालस्य महान् आनन्दः। सः सन्तोषातिरेकेण उक्तवान् -"एतत्क्षणतः मम शिरसः रक्षणकार्यं पोषणदायित्वं च भवतः एव" इति।

सरलः पीताम्बरः अनन्योपायतया जयपांलस्य शिरसः पोषणस्य रक्षणस्य च



दायित्वम् अङ्गीकृतवान्।

किन्तु एतत् दायित्वं महतः धनव्ययस्य कारणं जातम्। जयपालस्य राजवंशस्य गौरवानुगुणं पीताम्बरेण शिरसः रक्षणं करणीयम् आसीत्। एतेन पीताम्बरस्य आर्थिकी परिस्थितिः विषमतां गता। कानिचन दिनानि अतीतानि। पीताम्बरस्य केचन आत्मीयाः स्नेहिताः आसन्। 'पीताम्बरस्य उपरि एतत् विचित्रं दायित्वं यत् पतितं ततः विमोचनं कथम्' इति ते सर्वे सम्भूय चिन्तितवन्तः। अन्ते तेषां मनसि कश्चन उपायः स्फुरितः। एतम् उपायं ते पीताम्बरं श्रावितवन्तः।

उपायानुसारं अनन्तरदिने कश्चित् पुरुषः पीताम्बरस्य गृहस्य मार्गेण गच्छन् उच्चैः उक्तवान् -"वयं कर्णनासिकादिकं क्रीणीमः।

कोऽपि विक्रेतुम् इच्छति वा?" इति।

पीताम्बरः तं पुरुषम् आहूय पृष्टवान् "अये मित्र! स्पष्टं वदतु। भवान् किं कर्तुम् इच्छति?" इति।

"श्रीमन्! अहं मनुष्याणां नासिकां कर्णं च क्रीणामि" इति उक्तवान् सः पुरुषः।

"केन मूल्येन क्रीणाति?" इति पीताम्बरः तं पृष्टवान्।

"यदि उत्तमवंशीयस्य स्यात् तर्हि नासिकां कर्णद्वयं च पञ्चशतैः रूप्यकैः क्रीणामि" इति उक्तवान् सः पुरुषः।

पीताम्बरः तं पुरुषं जयपालस्य समीपं नीतवान्। तं प्रदर्श्य उक्तवान् -"एषः मम स्नेहितः राजवंशे उत्पन्नः। एतस्य शिरः इदानीं मम वशे अस्ति। मह्यं पञ्चशतं रूप्यकाणि ददातु, एतस्य नासिकां कर्णद्वयं च स्वीकरोतु" इति।

एतत् वचनं श्रुत्वा जयपालः क्रुद्धः। सः असमाधानेन उक्तवान् -"पीताम्बर! एतत् तु अनुचितम्" इति।

"अनुचितम् इति किमर्थं वदति? एतत् तु शिरः मम। अहं यथा इच्छामि तथा करोमि" इति उक्तवान् पीताम्बरः।

"आवां न्यायाधीशस्य समीपं गच्छाव। सः यथा वदति तथा आचराव" इति उक्तवान् पीताम्बरः।

अनन्तरं जयपालः पीताम्बरः च न्यायाधीशस्य समीपं गतवन्तौ। प्रवृत्तं निवेदितवन्तौ च।

न्यायाधीशः जयपालम् उक्तवान् -"श्रीमन्! भवतः नासिकां कर्णद्वयं च विक्रेतुम् पीताम्बरस्य पूर्णः अधिकारः अस्ति। यतः सः भवतः शिरसः पोषणार्थं यथेष्टं व्ययं कृतवान्। यदि भवान् नासिकायाः कर्णद्वयस्य च विक्रयणं निराकरोति तर्हि पीताम्बरेण यावान् व्ययः कृतः तावत् धनं दातव्यम्" इति।

न्यायाधीशस्य वचनं श्रुत्वा जयपालः निरुत्तरः जातः। स्वकीया या सम्पत्तिः आसीत् तां समग्रतया पीताम्बरस्य नाम्नि लिखितवान् सः। अनन्तरं तं ग्रामं त्यक्त्वा कुत्रापि गतवान् च।



# प्रकृतिवैचित्र्याणि




मरुभूमिवासिनः पतङ्गाः प्रतिदिनं आहारं तावत् स्वीकुर्वन्ति यावत् तेषां शरीरभारः भवति। पतङ्गानाम् एकः महागणः एकदिनाभ्यन्तरे २०, ००० टन्मितम् आहारं खादति! १९८४ तमे वत्सरे दक्षिण-आफ्रिकादेशे पतङ्गानाम् एकः गणः परिशीलितः, यस्य च विस्तारः २,००० वर्गमैल् आसीत्। अद्यावधि दृष्टेषु एषः एव महान् पतङ्गगणः।

२०, ०००, ००० – ४०, ०००, ००० वर्षाणां मध्यकाले जीवितः बलूचिथेरियं नामकः पशुः एव जगति अतिमहान् पशुः इति ज्ञायते। एतस्य दैर्घ्यं ६७ फूट् आसीत्। तथैव भारः च २०.टन्।







अमेरिकादेशे एल्लोस्टोन् राष्ट्रिये उद्याने विश्वे एव अतिप्रबलं ओल्ड् फेथ् फुल् नामकम् उष्णजलस्रोतः अस्ति। एतत् ६० निमेषेषु एकवारं १४० फूट् औन्नत्यं यावत् उद्गच्छति।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अङ्गरक्षकः- | Bodyguard |
| अतिवृष्टिः- | Torrential rain |
| अप्रमत्तता- | Steadiness |
| आपृच्छ्य- | Having sent off |
| आलम्ब्य- | Leaning over |
| आलवालः- | A basin of water around a tree root |
| उपत्यका- | Slope of a mountain |
| उष्ट्रः- | Camel |
| कदलीफलम्- | Banana |
| कुसीदवाणिज्यम्- | Money-lending |
| खड्गमृगः- | Rhinoceros |
| खुरः- | Hoof |
| गोधिका- | Lizard |
| घातुकः- | Traitor |
| चक्रवृद्धिः- | Compound interest |
| चषकः- | Tumbler |
| चित्रकः- | Cheetah |
| तैक्ष्ण्यम्- | Sharpness |
| देवदारुः- | Deodar(Cedar)tree |
| पणः- | Bet |
| परिणतिः- | Expertise |
| पिपासा- | Thirst |
| प्रवाहपीडा- | Flood |
| मरीचिका- | Green chilly |
| महिषः- | Buffalo (Male) |
| लक्ष्यभेदनम्- | Aiming |
| वटवृक्षः- | Banian tree |
| वाटिका- | Garden |
| विदार्य- | Having split |
| वृकः- | Wolf |
| वाढुम्- | To carry |
| शतघ्नी- | Cannon |
| शिबिका- | Palanquin |
| संक्षोभः- | Agitation |
| सन्धाय- | Having set the arrow |
| सप्ताहः- | Week |
| सर्पदंशनम्- | Snake-bite |
| स्फोटकम्- | Explosive |
| स्मरणिका- | Memento |
| हलः- | Plough |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां अक्टोबर् -८७ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्ट् -२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'जून्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् - **रोदनं क्षणिकं, यथा शैशवम्।**

द्वितीयचित्रम् - **हासोऽपि क्षणिकः, यथा जीवनम्।**

प्रेषकः ब्र. हरीशानन्दः, डि. ४८१९७, गीतामन्दिरम्, मिश्र पोखरा, वाराणसी - २२१००१ (उ.प्र.)

---

# चन्दमामा

वार्षिक ग्राहकशुल्कं (भारते) रू. ३०.००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु-

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६.**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# दूरदर्शकम्

प्रियाङ्कः— किं भोः राजीव! दूरदर्शकं कदा आनीतवान्?

राजीवः— गतसप्ताहे शुक्रवासरे।

प्रि— वर्णमयम्, उत वर्णरहितम्?

रा— वर्णमयम् एव।

प्रि— 'मम गृहे दूरदर्शकं मास्तु' इति वदति स्म किल भवान्।

रा— आम्। 'बालकाः केवलं दूरदर्शकं पश्यन्तः उपविशन्ति। पठनं सर्वथा विस्मरन्ति' इत्यतः...।

प्रि— सत्यम् एव एतत्। शनिवासरे भानुवासरे च नगरे सर्वे बालकाः दूरदर्शकस्य पुरतः उपविशन्ति। क्रीडाम् अपि विस्मृत्य ते दूरदर्शनेन प्रसार्यमाणं चलनचित्रं पश्यन्ति।

रा— किन्तु गृहे दूरदर्शकं नास्ति चेदपि ते पार्श्वगृहं गत्वा पश्यन्ति एव। सर्वदा पार्श्वगृहं गच्छन्ति चेत् पार्श्वगृहीयाः सहजतया असमाधानं प्रकटयन्ति। अतः एव अहम् अपि एकं दूरदर्शकम् आनीतवान्।

प्रि— वस्तुतः शैक्षणिकाः बोधप्रदाः उत्तमाः कार्यक्रमाः यदि दूरदर्शनकेन्द्रेण प्रसारिताः भवेयुः तर्हि एषः माध्यमः अतीव उपकाराय भवेत् खलु?

रा— आम्। किन्तु सर्वदा तथा न भवति किल? उत्तमाः कार्यक्रमाः अतीव विरलाः।

Hi Rajiv! When did you buy the T.V. ?

Last Friday.

Colour or Black and White ?

It's Colour.

You were saying, you wouldn't have a T.V. in your house!

Yes. Because the children will always sit in front of it and forget their lessons. That was the reason.

It is true. On Saturdays and Sundays all the city children will do nothing else but see any and every film that is shown. They are even unmindful of their play-time.

But even if there is no T.V. at home they still watch it in the neighbourhood !

If they keep on going to neighbours' houses, the neighbours will get disgusted. That is why I too bought one.

Supposing educational and other good programmes are shown, then it would really be worthwhile and useful isn't it ?

Yes. But it does not always happen. Good programmes are really very rare.